"शृङ्गारवीराद्भुतचित्रमन्तस्तस्यास्त्रिलोकैकनिधिं वहन्त्या।" इति । तत्र वीररसः प्रधानभूतः, भूभारावतरणार्थत्वादवतारस्य। तत्प्राधान्यं द्योतयितु तद्व्यञ्जकविशेषणं विशेष्यसन्निहितं कृतं "जयन्तीसंभव धाम" इति । एव अवान्तरप्रयोजनं विशेषणत्रयेण विभाव्यते । परमप्रयोजन च वैजयन्ती-विभूषणमित्यनेन कृष्णस्य परब्रह्मत्वरूपत्वाभिव्यक्त्या काव्यस्य परब्रह्म-गोचरतया पुण्ड्रेक्षुभक्षणवेतनतुल्य मुक्तिरूप सूच्यते, परब्रह्मसशीलनस्य मुक्तिपर्यवसायित्वादिति । एव विशेषणानां साभिप्रायत्वात्साभिप्राय-विशेषणविन्यासरूपः **परिकरो** नामार्थालङ्कारः। वन्दे बृन्देति वल्लवीवल्लभ-मिति जयन्ती वैजयन्तीति च पदेषु वर्णसमत्वाद्वर्णसमत्वरूपोऽ**नुप्रासः** शब्दालङ्कारः । यमकत्वप्रयोजकस्थाननियमाभावादत्र न क्वापि यमक-शङ्का । वन्द इति वर्तमानव्यपदेशेन प्रागुक्तरीत्या कवेर्भगवद्विषयो रतिभावो व्यज्यत इति भावध्वनिः । तेन तथाभूतमहापुरुषकृतकाव्यस्य नायकगौरवेणेव प्रबन्धगौरवेणाप्युपादेयत्व व्यज्यत इति वस्तुध्वनिः । ततो नेतृप्रबन्धगौरवेण फलोत्कर्षेणं चास्य काव्यस्यानीदृक्काव्या-न्तरेभ्योऽतिशयो व्यज्यत इति व्यतिरेकालंकारध्वनिश्च । प्रसादा-दयो गुणाश्चात्र श्लोके यथासभव द्रष्टव्याः । भूदेवताकस्य मगणस्या-मृतबीजस्य वकारस्य च प्रथम प्रयोगाद्गणवर्णशुद्धिस्सुव्यक्ता । यद्यपि वन्द इति धातुरौत्तराहाणामोष्ठ्यादिः। "भ्वादौ स तु पवर्गीयादौ बाध-बन्दती" इति बल्किष्पतिना पवर्गतृतीयादिरुक्तः । तथापि यथा शाड्ट श्ला-घायामिति धातोर्धातुपाठे टवर्गतृतीयान्तत्वेऽपि डलयोरैक्यात् लोके रूपशाली भाग्यशालीत्यादौ लान्तः प्रयोगः, एवं बवयोरैक्यात् अन्त-स्स्थादिरेव लोकेऽस्य प्रयोगः । माधवीयायां तु धातुवृत्तावय धातुपाठेऽ-प्यन्तस्स्थादिरङ्गीकृतः । यद्वा, काव्यारम्भप्रतिज्ञापरोऽय श्लोकः । अस्मिन् पक्षे वन्दे स्तुवे । "वर्तमानसामीप्ये" इति लट्, स्तोष्य इत्यर्थः ।

वदि अभिवादनस्तुत्योरिति धातोरिह स्तुत्यर्थः परिगृह्यते । तथा च तत्त्चरितमुखेन भगवद्दिव्यगुणानुसकीर्तनरूपतया स्तुत्यात्मकस्य काव्यस्यारम्भः प्रतिज्ञातो भवति । इदञ्च पद्यं **युग्मविपुला वृत्तं** । पथ्यावक्त्रमित्येके । "यस्यां ल्स्सप्तमो युग्मे सा युग्मविपुला मता ।" "युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितम् ।" इत्युभयोरपि विच्छित्ति विशेषादिति ॥ १ ॥

**यदेकैकगुणप्रान्ते श्रान्ता निगमवन्दिनः ।**
**यथावद्वर्णने तस्य किमुतान्ये मितपचाः ॥ २ ॥**

ननु अपरिमेयानन्तकल्याणगुणस्य भगवतो गुणकथन कथ शक्यमित्याक्षिपति— **यदेकैकेति** । निगमाः वेदा एव वन्दिनः सन्तमसन्त वा कमपि गुणमवलम्ब्यावश्य वन्दन्ते स्तुवन्तीति वन्दिनः स्तुतिपाठकाः । वन्दतिधातोस्स्तुतिवृत्तेः 'आवश्यकाधमर्ण्ययोर्णिनिः' इत्यावश्यकार्थे णिनि प्रत्ययः । यदेकैकगुणप्रान्ते यस्य भगवतः एकस्यैकस्य गुणस्याग्रभागे । श्रान्ताः श्रम प्राप्ताः । स्तोतु प्रवृत्ता एकमपि गुण कात्स्न्येंन वर्णयितुमशक्नुवन्तः प्रारम्भ एव प्रतिहता इत्यर्थः । तस्य भगवतः । यथावत् यथार्हम्, वर्णने सम्यग्गुणवर्णने । अन्ये मितंपचाः क्षुद्राः । किमुत ते न शक्ता इति किमु वक्तव्यमित्यर्थः । एकैकेति वीप्सायां द्विरुक्तिः "एकं बहुव्रीहिवत्" इति बहुव्रीहिवद्भावात् सुपो लुक् । यथावदिति यथाशब्दात् "तदर्हम्" इत्यर्हार्थे वतिप्रत्ययः । मितम्पचा इत्यत्र 'मितनखे च' इति पचधातोः खश् । 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः । 'कदर्ये कृपणक्षुद्रकिंपचानमितंपचाः ।' इत्यमरः । अयं भावः । 'नकिरिन्द्र त्वदुत्तरः, विश्वस्मादिन्द्र उत्तरः' इत्यादिप्रकारेण इन्द्रादिदेवतान्तरेष्वसन्तमपि गुणमारोप्य स्तवनशीला वन्दिकल्पा वेदा अपि यस्य गुणान् स्तोतुं प्रवृत्ताः

अनाद्यनन्तकालप्रवाहे अपरिमिततत्तत्कल्पवृत्तनानाविधतच्चरितावगम्योत्कर्षस्य एकैकगुणस्य प्रान्त एव श्रान्ताः, तावच्चरितकोट्यंशमात्रस्यापि कात्स्न्र्येन निबन्धुमशक्यत्वात् । तस्य निजनिखिलगुणवत्तया पौष्कल्येन वर्णने मनुष्यादिषु सन्तमपि गुणलेशं वर्णयितुमशक्ताः क्षुद्राः श्राम्यन्तीति किमु वक्तव्यमिति । अत्र कवेः काव्यारम्भे स्वविनयाविष्करणाय स्वाशक्तिप्रतिपादने प्रस्तुते सामान्यमभिहितमिति, अप्रस्तुतात्सामान्यात्प्रस्तुतविशेषप्रतीतेः **अप्रस्तुतप्रशंसा** । किमुतेति कैमुतिकन्यायोपन्यासात् **अर्थापत्तिः** । निगमवन्दिन इत्यभेदारोपात् **रूपकम्** । एतेषां च अलङ्काराणां परस्परानुप्राणितत्वेन सङ्करः । यद्यपि निगमवन्दिन इत्यत्र 'उपमितं व्याघ्रादिभिः' इति सूत्रेण निगमा वन्दिन इवेति उपमितसमासोऽपि सम्भवति । तथापि श्रमसम्बन्धानुरोधात् उत्तरपदार्थप्रधानो मयूरव्यंसकादिसमास एवेति रूपकनिर्णय. । उपमितसमासे हि पूर्वपदार्थप्राधान्यात् तत्र मुख्यार्थश्रमसबन्धो न स्यात् ॥ २ ॥

**शक्त्या शौरिकथास्वादः स्थाने मन्दधियामपि ।**
**अमृतं यदि लभ्येत किं न गृह्येत मानवैः ॥ ३ ॥**

इममाक्षेप समाधत्ते — **शक्त्येति** । मन्दधियामल्पबुद्धीनामपि । शक्त्या यावच्छक्ति । शौरिकथास्वादः शूरस्य वसुदेवपितुरपत्य शौरिः कृष्णः, बाह्वा देराकृतिगणत्वादिञ्प्रत्ययः 'एको गोत्रे' इति नियमात् व्यवहितापत्येऽपि परमप्रकृतेरेव प्रत्ययः । तस्य कथाया आस्वादः निबन्धनरूपः । **स्थाने** उचितः । 'स्थाने स्यादुचितेऽव्ययम् ।' इति रत्नमाला । तत्र दृष्टान्तमाह— अमृतं यदि लभ्येत, मानवैः किं न गृह्येत नास्वाद्येत आस्वाद्येतैवेत्यर्थः । '**हेतुहेतुमतोर्लिङ्**' । अयं भावः—अशक्येऽपि कात्स्न्र्येन भगवद्गुणवर्णने यावती **बुद्धेः** प्रसरणशक्तिस्तावद्वर्णनं मन्दधियामपि युक्तमेव ; न तु यावद्वर्णना-

शक्त्या शक्यांशोऽप्युपेक्षणीयः। 'न हि बहुमृतं मानवैर्न लभ्यत इति किञ्चिदपि लब्धं तैर्नास्वाद्यत इति। यद्वा एवं भावः। यथा अमृतं लभ्यते चेन्मनुष्या देवार्हमिदमिति स्वयं न त्यजन्ति, किन्तु लब्धमास्वादयन्त्येव ; एवं मन्दबुद्धितया भगवद्गुणसाकल्यवर्णनानधिकृता अपि रसज्ञातिप्राज्ञकृत्यमिदमिति नोदासते ; किन्तु शक्यांश वर्णयन्त्येव। अतो ममापि यथामति भगवच्चरितवर्णनप्रवृत्तौ न कोपि दोष इति। अत्रापि पूर्ववत् **अप्रस्तुतप्रशंसा**। उपमानोपमेययोर्भगवच्चरितामृतयोस्सामान्यधर्मयोः क्वचिन्निबन्धनमन्यत्रास्वादनमिति भिन्नयोर्बिम्बप्रतिबिम्बभावेन वाक्यद्वयेन निर्देशात् **दृष्टान्तः**। आस्वादशब्देन निबन्धनस्य निगीर्याध्यवसानात् भेदे अभेदरूपा**तिशयोक्तिश्च** अलङ्कार.। निगीर्याध्यवसानेन च तृष्णातिरेकविषयत्वं लक्षणामूल व्यङ्ग्यम्। तच्चोक्तदृष्टान्तस्योपस्कुरुत इति गुणभूतव्यङ्ग्यभेदः ॥ ३ ॥

**वसुधाश्रोत्रजे तस्मिन् व्यासे च हृदयस्थिते।**
**अन्येऽपि कवयः कामं बभूवुरनपत्रपाः ॥ ४ ॥**

**वसुधेति**। वसुधाश्रोत्रं वल्मीकम् 'वामलूरुश्च भूश्रवः' इति वल्मीकपर्यायेषु रत्नकोशः। 'श्रोत्रं ह्येतत् पृथिव्याः यद्वल्मीकः' इति श्रुतिः। तत्र जातो वसुधाश्रोत्रजः वाल्मीकिः तस्मिन्। 'सप्तम्यां जनेर्डः' इति डप्रत्ययः। तस्मिन् प्रसिद्धे यस्तादृशमादिकाव्यं निर्ममे इति भावः। व्यासे च महाभारतनिबन्धरि। हृदयस्थिते मनसि स्फुरति सति। अन्येऽपि तदुभयव्यतिरिक्ता अपि। काममत्यर्थम्। अनपत्रपाः रामायण महाभारतं च दृष्ट्वा स्वप्रबन्धान् पश्यन्तः कथं नापहसिष्यन्तीति परेभ्यस्त्रपया रहिता एव। 'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा सापत्रपान्यतः' इत्यमरः। कवयः काव्यकृतो बभूवुः। व्यासवाल्मीकिप्रबन्धौ दृष्ट्वापि तदन्येषां स्वस्व प्रबन्धनिर्माणे-

प्रवृत्तिः केवलं निरपत्रपकृत्यमेवेति तयोः प्रशंसापरोऽयं श्लोकः । यद्वा, प्राचां महाकवीनां प्रबन्धेषु सत्सु स्वकीयप्रबन्धनिर्माणप्रवृत्तावनौचित्य-परिहारेण स्वविनयाविष्करणार्थोऽयं श्लोकः । अत्र पक्षे अन्येऽपि मद-न्येऽपीत्यर्थः । अयं भावः—मदन्येऽपि हि कवयः सत्येव रामायणे भारते च यथा प्रबन्ध निरमिमत, एवं मयापि निर्मीयते । यथामति निर्माणे कापत्रपेति ॥ ४ ॥

**स कविः कथ्यते स्रष्टा रमते यत्र भारती ।**
**रसभावगुणीभूतैरलङ्कारैर्गुणोदयैः ॥ ५ ॥**

**स इति** । रसाः श्रृङ्गारादयः, भावाः तत्तद्रसोचिता विभावानुभावसञ्चा-रिणः, गुणीभूतानि 'अगूढमपरस्याङ्ग वाच्यसिद्ध्यङ्गमस्फुटम् । सन्दिग्ध-तुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ॥' इत्युक्तरूपाणि अगूढत्वापराङ्गत्वा-दिनिमित्तैरप्राधान्यं प्राप्तानि व्यङ्ग्यानि तैः । अलङ्काराः अनुप्रासोपमादयः तैः । गुणोदयाः माधुर्यादीनां रससमवेतानां गुणानां तत्तद्गुणोचितवर्णसमा-सरचनाभिव्यक्तयः तैः, प्रकारैः उपलक्षिता । भारती वाणी । यत्र रमते यस्मिन् बलादाकृष्यमाणतां विना स्वयमेव निरर्गळप्रवाहरूपा वर्तते । सः स्रष्टा अन्यैः कविभिरनुल्लिखितस्यार्थस्य प्रतिभया निष्पादकः । कविः कथ्यते कविरिति व्यपदिश्यत इति प्रकृतोऽर्थः । अपि चात्र रसभावाः रागप्रयुक्ता नयनादाववलोकनमन्दस्मिताद्यनुभावाः तेषां गुणीभूतैरुप-स्कारकैः तद्विजृम्भणहेतुभूतैरिति यावत् । अलङ्कारैः कटककेयूरादिभिः । गुणैः रूपयौवनादिभिः उदयन्ते नायकदर्शनेनोद्गच्छन्तीत्युदयाः दृष्टि-विकारादयः तैश्च । उपलक्षिता 'आलम्बनैर्गुणाश्चैव तच्चेष्टा तदलंकृतिः । तटस्थाश्चेति विज्ञेयश्चतुर्थोद्दीपनक्रमः ।' इति नायिकागुणालङ्कारचेष्टानां नायकरतिभावोद्दीपनहेतुत्वमुक्तम् । एवंभूता भारती वाग्देवता, यत्र रमते

रतिं करोति । सः, स्रष्टा लोकानां निर्माता चतुर्मुखः कविरिति व्यपदिश्यते । 'तेने ब्रह्महृदाय आदिकवये' इत्युक्तोऽप्रकृतोऽर्थः प्रतीयते । तेन च यथा सरस्वतीविहारास्पदीभूतश्चतुर्मुखः कविर्व्यपदिश्यते; एवमुक्तरूपविशिष्टकविताशाल्येव कविर्व्यपदिश्यते इत्युपमालङ्कारो ध्वन्यते। अनेन तादृशस्य कवित्वविधानेन तादृशरसभावादिचमत्काररहितमेव प्रबध्नन्तः परोच्छिष्टोपजीविनश्च कवयो न भवन्तीति व्यज्यते। तेषु च कवित्वनिषेधोबाधितः सन् तेषामपहास्यत्वादौ विशेषे पर्यवस्यतीत्यभिमतविशेषद्योतनार्थनिषेधाभासरूप **आक्षेपालङ्कारो** ध्वन्यते । अनेनस्वयं कुकवीनामुपालम्भेन नाहन्तथाभूत इति स्वकवितप्रौढिप्रकटनात् पूर्वश्लोके विनयाविष्करणेन स्वकाव्यस्य फल्गुकर्तृकत्वशङ्का माभूदिति रसभावादिभरिततया सारतरत्व द्योत्यत इति शब्दशक्तिमूलकवस्त्वलङ्कारध्वनिपरम्परानुसन्धेया ॥ ५ ॥

**तदात्वे नूतनं सर्वमायत्यां च पुरातनम् ।**
**न दोषायैतदुभयं न गुणाय च कल्पते ॥ ६ ॥**

अथ स्वकाव्ये नूतनमित्येव ये दोषमुद्भावयेयुर्मन्दास्तान् प्रत्याह— **तदात्व इति** । सर्वं इदानीन्तन प्राक्तनं चेत्यखिलम् प्रबन्धजातम् । तदात्वे तत्काले । नूतनम् । आयत्यामुत्तरकाले । पुरातनम् । चकारो भिन्नक्रमः । एकत्र धर्मद्वयसमुच्चयार्थः । 'तत्कालस्तु तदात्व स्यादुत्तरः काल आयतिः ।' इत्यमरः । एतदुभय नूतनत्व पुरातनत्व च । न दोषाय, न गुणाय च कल्पते । 'क्लृपिसंपद्यमाने च वक्तव्या' इति चतुर्थी । यत् नूतनत्वेन दूषयितु इष्यते तदेव कालान्तरे पुरातनं जायते । यच्च पुरातनत्वेन उपादातुमिष्यते तदपि स्वकाले नूतनमिति न ते प्रबन्धेषु हानोपादानप्रयोजके, किन्तु तत्तल्लक्षणवैकल्यसाकल्ये एवेति भावः ॥ ६ ॥

**प्रवृत्तामनघे मार्गे प्रमाद्यन्तीमपि क्वचित् ।**
**न वाचमवमन्यन्ते नर्तकीमिव भावुकाः ॥ ७ ॥**

**प्रवृत्तामिति** । अघ पापं 'अघशब्दो भवेत् पापे दुःखव्यसनयोरपि' इति अजयः । तद्विरुद्धः अनघः । अधर्मवनञ्समासः । अविरुद्धे तस्मिन् सकलपापक्षयकारिणि । मार्गे भगवच्चरितसग्रथनरूपे पथि । प्रवृत्तां वाच कविताम् । क्वचित् सूक्ष्मे भगवच्चरितरहस्यादिविषये शब्दार्थगुणदोपादिविषये वा । प्रमाद्यन्तीमनवधानामपि । भावुकाः भावनाकृतो भगवद्भक्ताः । 'भुवोऽवकल्कने' इति भवतेर्णिजन्तात् 'लपपत' इत्यादिना उकञ्प्रत्ययः । अवकल्कन चिन्तनमिति व्याख्यातम् नावमन्यन्ते क्वचित् प्रमादमात्रेण न तत्रावमान कुर्वन्ति किन्तु भगवद्विपय यथाकथञ्चित् अबद्धमपि निखिलाघविध्वसनमिति परिगृह्णन्त्येवेत्यर्थः । उक्त च श्रीभागवते । 'स वाग्विसर्गो जनताघविप्लवो यस्मिन् प्रतिश्लोकमबद्धवत्यपि । नामान्यनन्तस्य यशोऽङ्कितानि यत् शृण्वन्ति गायन्ति गृणन्ति साधवः ।' इति । नर्तकीमिवेत्युपमाननिर्देशः । अत्र पक्षे अनघे विगलितवेद्यान्तरनाट्यरसास्वादनेन दुःखविरोधिनि । मार्गे मार्गो देशीति द्विधा नृत्तमुक्त सङ्गीतशास्त्रेषु । तत्र मार्गाख्ये नृत्ते । प्रवृत्तां नर्तकीमिव मार्गनृत्ते कृतशिक्षां वनितामिव । 'नर्तकः सुरभिः प्रोक्तो मार्गनृत्ते कृतश्रमः ।' इति सङ्गीतरत्नाकरः । 'शिल्पिनि ष्वुन्' इति ष्वुन्प्रत्यये 'षिद्गौरादिभ्यश्च' इति ङीष् । भावुकाः तत्तद्भावचेष्टाविशेषज्ञाः । 'भावा विनैव चेष्टाभिर्न दृश्यन्ते कदाचन । तस्माच्चेष्टाविशेषज्ञा भावुका रसिकाः स्मृताः ॥' इति शारदातनयः । अत्र मार्ग इति भावुका इति च भिन्नार्थशब्दानां युगपदुदारणात् **श्लेषः** । श्लिष्टपदोपात्तयोरर्थयोरुपमायां सामान्यधर्मत्वसिद्ध्यर्थमभेदाध्यवसायात्तन्मूला**तिशयोक्तिश्च** । तदनुप्राणितश्च नर्तकीमिवेति **उपमालङ्कारः** ॥ ७ ॥

**विहाय तदहं व्रीडां व्यासवेदार्णवामृतम् ।**
**वक्ष्ये विबुधजीवातुं वसुदेवसुतोदयम् ॥ ८ ॥**

**विहायेति** । तत्तस्मादुक्तहेतोः । अहं व्रीडां यत्किञ्चिदवलम्ब्यापहसिष्यन्तीति त्रपम् । विहाय । व्यासवेदार्णवामृत व्यासवेदो महाभारतं तदेवार्णवः तस्यामृत अमृतवत् सारभूतम् । विबुधा विद्वांसः त एव विबुधा देवाः इति श्लिष्टरूपकम् । तेषां जीवातु भक्त जीवनौषधं च । देवानां भक्तममृतम्, प्रबन्धो विदुषाम् । हृदयाप्यायनत्वादुपचारात् । 'जीवातुर्जीविते भक्ते जीवातुर्जीवनौषधम् ।' इति विश्वः । वसुदेवसुतस्य कृष्णस्य उदयमभ्युदयम् । वक्ष्ये अभिधास्ये वर्णयिष्य इत्यर्थः । ब्रुवो वचिरात्मनेपदी । अत्र व्यासवेदार्णवामृतमिति विबुधजीवातुमिति च **श्लिष्टाश्लिष्टशब्दनिबन्धनरूपकद्वयसङ्करः** ॥ ८ ॥

**क्रीडातूलिकया स्वस्मिन् कृपारूषितया स्वयम् ।**
**एको विश्वमिदं चित्रं विभुः श्रीमानजीजनत् ॥ ९ ॥**

अथ 'यदोर्वंश नरः श्रुत्वा सर्वपापैः प्रमुच्यते । यत्रावतीर्ण कृष्णाख्य पूर्णं ब्रह्म नराकृति ॥' इति यदुवंशश्रवणस्य परमपावनत्वस्मरणात् किञ्चियदुवंशपरम्परावर्णनपूर्वक भगवच्चरितविवक्षया प्रथम यदुवंशकूटस्थस्य चन्द्रमसः पुरुषसूक्तप्रक्रियया पुरुषोत्तमस्य मानसादुत्पत्त्यभिधित्सया तदुपोद्घाततत्वेन भगवता पुरुषोत्तमेन सर्वमिद जगत्सृष्टमित्यर्थं तावदाह— **क्रीडेति** । विभुः निखिलजगत्सृष्टिपालनसंहारानुकूलविविधशक्तियोगात् निरतिशयवैभवः । श्रीमान् नित्ययोगे मतुप् । अनपायिन्या श्रीमहालक्ष्म्या नित्ययुक्तः पुरुषोत्तमः । एकः सहायान्तरनिरपेक्ष एव । **इदं विश्वं जगत्** समस्त वा । 'विश्व समस्तजगतोः' इति **विश्वः, चित्रमाश्चर्यभूतं तदेव**

चित्रमालेख्यमिति श्लिष्टरूपकम् । 'आलेख्याश्चर्ययोश्चित्रम् ।' इत्यमरः । कृपारूषितया दयारसेन दिग्धया। क्रीडातूलिकया खलीलैव तूलिका आलेख्यकूर्चिकैया। स्वयं स्वतन्त्रेण आत्मना। स्वस्मिन्नात्मन्यधिकरणे। अजीजनत् जनयामास । जनिधातोर्णिचि लुङो रूप । भूतसामान्यविवक्षया च लुङ्प्रयोगः । अत्र स्वय स्वस्मिन्निति विशेषणद्वयेन भगवत प्रपञ्चनिमित्तोपादानोभयविधकारणत्व दर्शितम् । तस्य समाभ्यधिकराहित्य विभावयितु अनेककोटिब्रह्माण्डघटितस्यास्य प्रपञ्चस्य निर्माणे सहायान्तरनैरपेक्ष्य दर्शितं एक इति । एतावत्प्रपञ्चनिर्माणे असहायस्य कर्तृत्वे असभावनां व्यावर्तयितु सर्वशक्तिमयत्व दर्शित विभुरिति । प्रकरणोपपदादिसङ्कोचरहित हि विभुपद तस्य निरतिशय वैभव प्रख्यापयति । नित्यावाप्तसमस्तकामस्य भगवतः प्रपञ्चनिर्माण प्रयोजनाभावादनुपपन्नमिति शङ्कां वारयितुमुक्त क्रीडातूलिकयेति । यथा सार्वभौमोऽवाप्तसकलकामोऽपि लीलया स्वय कन्तुकादिक करोति तथा भगवानपि प्रपञ्चमित्याशयः । ननु स्वस्य लीलेत्येतावता यदि जीवराशीन्नरकगर्भयासादिदुःखपङ्के निमज्जयति, तर्हि निष्करुण एव स्यात् । ततश्चास्य निखिलहेयप्रत्यनीकसमस्तकल्याणगुणपरिपूर्णत्वहानिरिति शङ्कां वारयितुमुक्त कृपारूषितयेति । न केवल लीलातूलिकया जगन्निर्माति; किन्तु कृपारूषितया । अत एव मुक्त्युपायप्रतिपादका अपि वेदभागा उपदिष्टाः । तदुपयोगीनि कर्माणि । तन्निर्वर्तकानि च व्रीह्यादीनि सृष्टानि । न हि जीवेषु निर्व्याजनिरतिशयकृपाराहित्ये नित्यतृप्तः स्वय मुक्त्युपायकर्मादीन्युपदिशति । तथा निर्व्याजकृपालुत्वेऽपि निर्हेतुक मेव न मोचयति । स्वलीलायास्सर्वथैव विरोधप्रसङ्गात् । मोचकस्यापि भगवतो मुक्त्युपायधर्मसापेक्षत्वात् न वैषम्यनैर्घृण्ये, 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' इति न्यायादिति भावः । नन्वेवविधो जगन्निर्माता पुरुषोत्तम एवेत्यत्र किं प्रमाणमित्याकाङ्क्षायां पुरुषसूक्तं तत्र प्रमाणं विभाव-

यितुमुक्त श्रीमानिति । पुरुषोत्तम एव खलु श्रियः पतित्वेन प्रसिद्धः। पुरुषसूक्तानन्तरानुवाके च तदेकवाक्यतापन्ने 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति प्रकृते जगन्निर्मातरि पुरुषे श्रियः पतित्वं निबद्धम् । अतः पुरुषोत्तम एव जगन्निर्माता सिध्यतीत्यभिप्रायः। इत्थ विचिन्त्याः सर्वत्र भावाः सन्ति पदे पदे । कवितार्किकसिंहस्य काव्येषु ललितेष्वपि । तथापि विस्तरापत्तेर्नैवमग्रे प्रपञ्च्यते । काव्यव्याख्याकृतां रीतिः प्राचामेवानुगम्यते ॥ एवं विशेषणानां विशेष्यस्य च साभिप्रायत्वात् **परिकरपरिकराङ्कुरालङ्कारौ**। विशेषणसाभिप्रायत्व परिकरः, विशेष्यसाभिप्रायत्व परिकरांकुर इति तयोर्भेदः । क्रीडातूलिकयेति **रूपकम्** । रूपणान्वयानुसारतश्च क्रीडायास्तूलिकात्वारोपेण कृपाया रूषिकाया रागद्रव्यत्वारोपो गम्यत **इत्येकदेशवृत्तिरूपकालङ्कारः**। अनेन रूपकेणोत्थापित च चित्रशब्दे श्लिष्टरूपकमिति तेनास्य सकरः ॥ ९ ॥

**जगदाह्लादनो जज्ञे मनसस्तस्य चन्द्रमाः ।**
**परिपालयितव्येषु प्रसाद इव मूर्तिमान् ॥ १० ॥**

**जगदिति**। तस्य पुरुषोत्तमस्य। मनसो मानसात्। जगदाह्लादनः लोकानामाह्लादयिता। बहुलग्रहणात् कर्तरि ल्युट्। चन्द्रमाः चन्द्रः। परिपालयितव्येषु रक्षितव्येषु । मूर्तिमान् प्रसाद इव तन्मनसः कृतज्ञत्वादिगुणस्तोम इव । जज्ञे जातः । जनिधातोः कर्तरि लिट् । 'गमहनजनखनघसां लोपः क्ङित्यनङि' इत्युपधालोपः। चन्द्रमसः जगदाह्लादनत्वादिनिमित्तेन भगवन्मनःप्रसादतादात्म्यसंभावना**दुत्प्रेक्षालङ्कारः**। 'कृतज्ञतोपकर्तृत्वं भूयो दोषानभिज्ञता। एष प्रसादश्चित्तानां लक्षणैरुदाहृतः ॥' इति शारदातनयः। यद्यपि श्रीविष्णुपुराणादिषु चन्द्रवंशोपक्रमे तस्यात्रिभवत्वमुक्तम्; तथापि चन्द्रवंश्यानां राज्ञां आभिजात्यातिशयज्ञापनार्थं 'चन्द्रमा

मनसो जातः' इति पुरुषसूक्तप्रक्रियैवात्रानुसृता। न चात्र विरोधः शङ्कनीयः। समयभेदेनोभयत्र तज्जननेनाविरोधात्। उक्तं हि वायवीये। 'तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः। तानि तानि प्रणीतानि विद्वांस्तत्र न मुह्यति ॥' इति ॥ १० ॥

**यदपत्यसमुद्भूतः पुण्यकीर्तिः पुरूरवाः ।**
**सतामाहितवह्नीनां विहारस्थेयतां ययौ ॥ ११ ॥**

**यदपत्येति**। यस्य चन्द्रमसोऽपत्यं बुधः तत्समुद्भूतः। पुण्या पुण्यकरी कीर्तिर्यस्य स तथोक्तः। पुण्यशब्दात्तत्करोतिण्यन्तात् पचाद्यचि 'णेरनिटि' इति णिलोपे च सति पुण्यशब्दः पुण्यकरवाची। एवं भूतः पुरूरवाः। आहितवह्नीनामाहिताग्नीनाम्। सतां शिष्टानाम्। विहारे कालान्तरभाविनि परलोकविहारे स्थेयतां विवादपदनिर्णेतृताम्। ययौ। तिष्ठत्यत्र विवाद इति स्थेयः। 'स्थेयो विवादविषयनिर्णेतरि पुरोहिते' इति विश्वः। एवं विष्णुपुराणे पुरूरवसं प्रकृत्य श्रूयते—'निर्मन्थ्याग्नित्रयमाम्नायानुसारी जुहाव। ऊर्वशीसालोक्यञ्च फलमभिगहितवान्। तेनैवाग्निना बहुविधान् यज्ञानिष्ट्वा गन्धर्वलोकानवाप्य ऊर्वश्या सहावियोगञ्चावाप। एकोऽग्निरादावभवत्। ऐलेन मन्वन्तरे त्रिधा प्रवर्तितः।' इति। अतः पुरूरवाः कर्मणामभिसाहितफलाफलसवादे सतां प्रमाणभूतोऽभूदित्यर्थः। विहारे अग्नीनामाहवनीयादिरूपेण विभज्य हरणरूपे प्रणयन इति वा योज्यम्। अग्नि विहृत्येत्यादौ विहारशब्दस्य प्रणयने प्रयोगात्। तथा चाग्नितित्वकल्पने प्रमाणभूतोऽभूदित्यर्थः। यदपत्येत्यत्र यत्पदस्य स चन्द्रमा जज्ञ इति पूर्वश्लोकेन संबन्धः। अस्थेये स्थेयत्वारोपाद्रूपकालङ्कारः ॥ ११ ॥

**समवर्धत तद्वंश उपर्युपरि पर्वभिः ।**
**यशोमुक्ताफलैर्यस्य दिशो दश विभूषिताः ॥ १२ ॥**

**समवर्द्धतेति**। तद्वंशः तस्य चन्द्रमसो वंशोऽन्वयः स एव वंशो वेणुः। उपर्युपरि उत्तरोत्तरम्। पर्वभिः पुरूरवसः आयुः, ततो नहुषः इत्यादिप्रकारेणोत्पन्ना राजान एव पर्वत्वेनाध्यवसीयन्ते तैः। समवर्द्धत सम्यग्वर्द्धते स्म। यस्य वंशस्य, यशांस्येव मुक्ताफलानि तैः। दश दिशः प्राच्यादयोऽष्टौ ऊर्ध्वमधश्चेति दश दिशः। विभूषिताः अलङ्कृताः। वंशकाण्डेभ्यो मुक्ताफलान्युत्पद्यन्त इति प्रसिद्धिः। स वंशः समवर्धतेति पूर्वेणान्वयः। उत्तरवाक्यगतो यच्छब्दः कुलकश्लोकेष्विव पूर्ववाक्ये तच्छब्दप्रयोगानपेक्ष एव पूर्ववाक्यान्वयीति तदप्रयोगः। तदुक्तं काव्यप्रकाशिकायाम् 'यच्छब्दस्तूत्तरवाक्यार्थगतत्वेनोपात्तः सामर्थ्यात् पूर्ववाक्यार्थगतस्य तच्छब्दस्योपादानं नापेक्षते' इति। अत्र भूषितत्व मुक्ताफलैरेव सम्भवतीति रूपकसमासे सति तदुत्थापिते च वंशशब्दश्लेषे **श्लिष्टशब्दनिबन्धनपरंपरितरूपकालङ्कारः** ॥ १२ ॥

**बभूव नहुषस्तस्मिन्नैरावत इवाम्बुधौ।**
**यमिन्द्रविगमे देवाः पदे तस्य न्यवीविशन्॥ १३ ॥**

**बभूवेति**। तस्मिन् वंशे। अम्बुधौ सागरे। ऐरावत इव नहुषः बभूव। यं नहुषम्। इन्द्रस्य शक्रस्य विगमे अपगमे सति। तस्य इन्द्रस्य। पदे स्थाने। देवाः अग्न्यादयः। न्यवीविशन् निवेशयन्ति स्म। विशतेर्णिजन्ताल्लुङ्। **उपमालङ्कारः**। त्वाष्ट्रवधरूपब्रह्महत्यादोषान्नष्टप्रभावे क्वापि निलीने शक्रे तदन्ये देवाः सम्भूय भुवि राज्यं प्रशासतं नहुषं क्रतुशतयाजिनं तत्पदोचितं विचिन्त्य तस्य पदेऽभ्यषेचयन्निति भारतकथात्रानुसन्धेया। इन्द्रविगम इति समासे गुणभूतस्यापीन्द्रस्य तस्येति सर्वनाम्ना परामर्शो युक्तः। तदाह वामनः 'सर्वनाम्नानुसन्धिर्वृत्तिच्छन्नस्य' इति ॥ १३ ॥

**नरेन्द्राः पृथिवीचक्रे नामचिह्नैरलंकृताः ।**
**जङ्गमास्तस्य वीरस्य जयस्तम्भा इवाभवन् ॥ १४॥**

**नरेन्द्रा इति** । वीरस्य तस्य नहुषस्य । नामचिह्नैः तन्नामधारणरूपैः तन्निर्जितत्वचिह्नैः । अलङ्कृताः । नरेन्द्राः प्रतिपार्थिवाः । पृथिवीचक्रे भूमण्डले । 'चक्रं सैन्ये जलावर्ते रथाङ्गे नयराष्ट्रयोः । ससारे मण्डले वृत्ते छिद्रभेदास्त्रभेदयोः' इति वैजयन्ती । जङ्गमाः सञ्चारिणः । जयस्तम्भा इवाभवन् । जयस्तम्भा अपि जेतृनामाक्षरलेखनरूपैश्चिह्नैरलङ्कृता भवन्तीति भावः । अत्र नरेन्द्राणां नामचिह्नितत्वरूपगुणनिमित्तेन जङ्गमजयस्तम्भसभावनारूप **स्वरूपोत्प्रेक्षालङ्कारः** ॥ १४ ॥

**शक्तिरप्रतिघा तस्य शात्रवैरपि तुष्टुवे ।**
**यथावत्साधकस्येव यावदर्था सरस्वती ॥ १५ ॥**

**शक्तिरिति** । तस्य नहुषस्य । अप्रतिघा प्रतिघातेन रहिता । सरस्वतीपक्षे रुड्रहिता । 'प्रतिघो रुट्प्रतीघातौ' इत्युभयत्र वैजयन्ती । शक्तिः बलम् । शात्रवैः प्रतिभूपतिभिरपि । तुष्टुवे स्तुता । कर्मणि लिट् । यथावत् सम्यक् । साधकस्य स्वमतव्यवस्थापकस्य वादिनः । यावदर्था समग्रार्था प्रतिपादनीयाशेषार्थप्रतिपादिका । सरस्वतीव । इहापि हि अनाग्रहमुपन्यस्यमानकथायां निग्रहभिया स्फुटमस्तुवद्भिरपि प्रतिवादिभिरनन्तरं वादी स्तूयत एव । **उपमालङ्कारः** ॥ १५ ॥

**वीरो रस इवोत्साहान्नहुषादभ्यजायत ।**
**ययातिर्नाम येनैन्द्रमर्धासनमधिष्ठितम् ॥ १६ ॥**

**वीर इति** । नहुषात् । ययातिर्नाम ययातिरिति प्रसिद्धः । 'नाम

प्रकाशे संभाव्ये' इति रत्नमाला । उत्साहात् स्थायिभावात् । वीरो वीराख्यो रस इव । अभ्यजायत । 'भावोत्कर्षो रसः स्मृतः ।' इति रसस्य स्थायिभावावस्थाविशेषत्वस्मृतेः तयोः कार्यकारणभावोक्तिः । येन यया-तिना । ऐन्द्रं इन्द्रसंबन्धि । अर्धासन आसनस्यार्धे । 'अर्धं नपुंसकं' इति समासः । अधिष्ठित उपविष्टम् । इन्द्रस्यार्धासने ययातिना चिरं निविष्ट-मिति महाभारतकथात्रानुसन्धेया । **उपमालङ्कारः** ॥ १६ ॥

**विशालविपुलोत्तुङ्गे यद्बाहुशिखरान्तरे ।**
**आसीद्वीरश्रिया सार्धं भूमिरर्धासने स्थिता ॥ १७ ॥**

**विशालेति** । विशाल परिणाहि विपुल पृथुल उत्तुङ्ग उन्नतं चेति खञ्जकुब्जवद्विशेषणसमासः । 'विपुल पृथुले भावे मेरुपश्चिमभूधरे ।' इति विश्वः । एवभूते । यस्य ययातेः बाहुशिखरान्तरे स्कन्धावकाशे । 'स्कन्धो भुजशिरोऽसोऽस्त्री' इत्यमरः । वीरश्रिया सार्द्धम् । भूमिः । अर्द्धासने । स्थिता । आसीत् । शौर्यलक्ष्मीः भूमिश्चोभे अपि अस्य भुजशि-खर एव विश्रान्ते इत्यर्थः ॥ १७ ॥

**निदेशं तस्य राजानो न शेकुरतिवर्तितुम् ।**
**प्राप्तस्वपरनिर्वाहं प्रमाणमिव वादिनः ॥ १८ ॥**

**निदेशमिति** । तस्य ययातेः । निदेश आज्ञाम् । अतिवर्तितुं अतिल-ङ्घितुम् । राजानः प्रतिपार्थिवाः । न शेकुः न शक्नुवन्ति स्म । प्राप्तस्वपर-निर्वाह प्राप्तः स्वस्य वादिनः परस्य प्रतिवादिनश्च निर्वाहो यस्मिन् तत् उभयनिर्वाह्यम् । प्रमाणम् । वादिनो वावदूका इव । यथा वादिना स्वोक्तार्था-नङ्गीकारे उभयनिर्वाह्यप्रमाणविरोधापादने कृते प्रतिवादिनस्तत्प्रमाणमति-वर्तितुं न प्रभवन्ति तद्वदित्यर्थः । प्राप्तस्वपरनिर्वाहमित्युपमेयस्यापि विशे-

षणम् । तत्र पक्षे, स्वस्य निदेष्टुः परेषां स्वसुहृदादीनां च कार्यनिर्वाहक-मित्यर्थः ॥ १८ ॥

**तटाकमिव तापार्तास्तमिन्द्रमिव निर्जराः ।**
**भावा इव रसं भव्याः पार्थिवाः पर्युपासत ॥ १९ ॥**

**तटाकमिति** । तं ययातिम् । पार्थिवाः प्रतिभूपतयः । तटाकम् । तापार्ताः आतपक्लिष्टा इव । इन्द्रं निर्जरा इव । रसं शृङ्गारादिम् । भव्याः तद्रसयोग्याः । 'भव्यं सत्ये शुभे चाथ भव्यवद्योग्यभाविनोः ।' इति विश्वः । भावाः विभावानुभावस्थायिसञ्चारिभावा इव । पर्युपासत परित आसेवन्त । तटाक इति कवर्णान्तत्वेन प्रसिद्धः । कवर्गतृतीयान्तेषु तु विश्वप्रकाशेन रत्नमालाकारेण च पठितः । केचित्तु तड आघाते इति धातूत्पन्नतया मध्यमाक्षरमपि टवर्गतृतीयमाहुः । इदमत्रानुसन्धेयम् । 'रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा । जुगुप्साविस्मयशमाः स्थायिभावाः प्रकीर्तिताः । कारणान्यथ कार्याणि सहकारीणि यानि च । रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः । विभावा अनुभावाश्च कथ्यन्ते व्यभिचारिणः ।' तत्र शृङ्गारस्य रतिः स्थायिभावः । रतेरानन्दात्मतया स्थायिन्याः नाट्यकाव्ययोरभिनीयमाननिबध्यमानैर्विभावादिभिराहितप्रसादायाः शृङ्गाररूपेणाभिव्यक्तेः । आभिरूप्यादिशालिनौ स्त्रीपुंसावालम्बनविभावौ, तयोः परस्परं रतिभावादौ कारणत्वात् । पुरहर्म्यचन्द्रोदयमलयमारुतकोकिलालापादयः उद्दीपनविभावाः, अङ्कुरितरतिभावोद्दीपनहेतुत्वात् । नयनान्तावलोकनहसितभुजवल्लीवेल्लनादयो मधुरव्यापाराः अनुभावाः, तेषां रतिभावकार्यत्वात् । 'निर्वेदग्लानिशङ्काश्रमधृतिजडताहर्षदैन्यौग्र्यचिन्तात्रासेर्ष्यामर्षगर्वाः स्मृतिमरणमदाः सुप्तिनिद्रावबोधाः । व्रीडापस्मारमोहास्समतिरलसता वेगतर्कावहित्था व्याध्युन्मादौ विषादौत्सुकचपलयुता-

त्रिंशदेते त्रयश्च ।' इत्युक्तेषु त्रयस्त्रिंशत्संचारिषु आलस्यौग्र्यमरणव-र्जिताः सञ्चारिणः, रतिभावे स्थायितयानुवर्तमाने तस्मिन् मध्ये आगमापायितया तत्परिपोषकत्वरूपसहकारित्वात् । एवं हास्यरसे 'हासात्मकः चित्तविकासविशेषः स्थायीभावः । विकृतवेषालङ्कारधार्ष्ट्यचेष्टालौल्यकुहनासत्प्रलापव्यङ्गदर्शनादयो विभावाः । ओष्ठविवरणदशनदर्शनाननविकूणननासाविकृतिकपोलस्पन्दनापार्श्वग्रहणादयोऽनुभावाः । अवहित्थालस्यतन्द्रीनिद्राप्रभृतयः सञ्चारिण इति । एवप्रकारेण प्रतिरस तदर्था विभावादयो व्यवतिष्ठन्त इति भव्या इत्युक्तम् । अत्र एकस्यैवानेकोपमानोपादानात् उपासनरूपसाधारणधर्मस्य सर्वत्रैकत्वाच्चाभिन्नसाधारणधर्म**मालोपमालङ्कारः** ॥ १९ ॥

**यदुर्नाम ततो जज्ञे यत्सन्ततिसमुद्भवैः ।**
**समानगणनालेख्ये निस्समानैर्निषद्यते ॥ २० ॥**

**यदुरिति** । ततो ययातेः । यदुर्नाम यदुरिति प्रसिद्धः । जज्ञे । यत्सन्ततिसमुद्भवैः यद्वंशप्रभवैः । निस्समानैः अप्रतिमैः । पार्थिवैः । समानगणना इमे समाना इति गणना । आलेख्ये चित्रे । निषद्यते अधिष्ठीयते प्राप्यत इति यावत् । निपूर्वात्सीदतेः कर्मणि लट् । 'सदेरप्रतेः' इति षत्वम् । समानगणना क्रियते चेत् आलेख्यगततत्तत्प्रतिमास्वेव नान्यत्रेत्यर्थः । अत्र यदुभिः साम्यस्य पार्थिवान्तरादिष्वनेकेषु सभाव्यमानस्यैकत्रालेख्य एव नियमनात् **परिसंख्यालङ्कारः** ॥ २० ॥

**देहीति वदतां प्रायः प्रसीदन् प्रत्युवाच सः ।**
**ललितध्वनिभिर्लक्ष्मीलीलाकमलषट्पदैः ॥ २१ ॥**

अथास्य वितरणं श्लोकत्रयेण वर्णयति । **देहीति** । स यदुः । देहीति

वदतां याचमानानाम्। प्रायः प्रसीदन् भृश सन्तुष्यन् । ललितध्वनिभिः मञ्जुलस्वनैः । लक्ष्मीलीलाकमलषट्पदैः लक्ष्म्याः क्रीडाकमलगतैर्भ्रमरैः । प्रत्युवाच। त प्रति देहीति याचनसमय एव महता तस्य वितरणेन याचकेषु सन्निहितायाः श्रियः क्रीडापद्मभृङ्गरव एव तत्प्रतिवचनमासीदित्यर्थः । अत्र लक्ष्मीलीलाकमलषटपदध्वनीनामसबन्धेऽपि तत्सबन्धकथनाद**तिशयोक्त्यलङ्कारः** । अतिशयोक्तिसिद्धे षट्पदध्वनने प्रतिवचनत्वारोपस्य प्रकृतोपयोगात् **परिणामालङ्कारः** । तथाभूतमेव तेषु तत्प्रतिवचन न तु लौकिकप्रतिवचनविलम्ब इति **परिसंख्यालङ्कारः** ॥ २१ ॥

**स च वृत्तविहीनस्य न विद्यां बहुमन्यत ।**
**न हि शुद्धेति गृह्येत चतुर्थीचन्द्रचन्द्रिका ॥ २२ ॥**

**स इति**। किञ्चेति चार्थः ।स यदुः। वृत्तविहीनस्य आचारविहीनस्य । विद्यां वेदादिरूपम् । न बहुमन्यत न बहुमेने । 'न विद्यया केवलया तपसा वापि पात्रता । यस्य वृत्तमिमे चोभे तद्धि पात्र प्रचक्षते ।' इति स्मृतेः केवलविद्यया पात्रत्वाभावात् न तामाद्रियतेत्यर्थः । अत्र दृष्टान्तमाह—**न हीति** । चतुर्थीचन्द्रस्य चन्द्रिका । शुद्धा विमलेति । नहि गृह्येत । नहीत्यखण्ड पद नञर्थे वर्तते । 'अभावे नहि नो नापि' इत्यमरः । विभक्त एव वा। हिशब्द उक्तार्थप्रसिद्धिद्योतकः । चतुर्थीति भाद्रपदशुक्लचतुर्थी विवक्षिता । ' कन्यागतचतुर्थ्यान्तु शुक्ले चन्द्रस्य दर्शनम् । मिथ्याभिदूषणं कुर्यात् तस्मात् पश्येन्न तं तदा ।' इति तस्यां चन्द्रदर्शननिषेधात् ॥ २२ ॥

**अपुनःप्रार्थनीयस्य प्रार्थिताधिकदायिनः ।**
**अर्थिनः प्रथमे तस्य चरमान् पर्यपूरयन् ॥ २३ ॥**

**अपुनरिति** । एकवारं प्रार्थिते पुनरप्रार्थनीयस्य । प्रार्थिताधिकदायिनः यावत् प्रार्थितं ततोऽप्यधिकं दातुं शीलवतः । ताच्छीलिको णिनिप्रत्ययः । तस्य यदोः । प्रथमे अर्थिनः प्रथमागता याचकाः । प्रथमचरमतयेत्यादिना वैकल्पिकी सर्वनामसंज्ञा । चरमान् पश्चादागतानर्थिनः । पर्यपूरयन् परिपूर्णानकुर्वन् । यदुर्यथार्थिभ्यः प्रयच्छति तथा प्रदातुं तदर्थिन एव समर्था आसन्निति तस्य महावदान्यत्व व्यञ्जयति ॥ २३ ॥

**शराणां शात्रवाणां च सन्धानेन महौजसः ।**
**तस्य निर्धूतलक्षेण द्विः क्वचिन्नाप्यभूयत ॥ २४ ॥**

**शराणामिति** । महौजसो महाबलस्य । 'ओजो बले च दीप्तौ च' इति विश्वः । तस्य यदोः । निर्धूतलक्षेण निरस्तशरव्येण, निरस्तच्छद्मना च । 'लक्ष शरव्ये संख्यायां लक्ष छद्मनि कथ्यते' इति प्रकाशः । एवभूतेन, शराणां शात्रवाणां च सधानेन । क्वचिदपि । द्विर्नाभूयत । तस्य प्रथमशरसधानमेव लक्ष्यघातकमिति पुनश्शरसधान न कर्तव्यमासीत् । तथा तस्य सन्ध्यर्थिषु शात्रवेषु सधान निष्कपटम्, न त्वग्रे बाधनाय छद्मना विश्वासापादकमिति तदपि पुनर्न कर्तव्यमासीदित्यर्थः । अत्र वर्णनीयराजसंबन्धितया प्रस्तुतयोश्शरशात्रवसन्धानयोः एकक्रियान्वयरूप **तुल्ययोगितालङ्कारः** । स च लक्षशब्द**श्लेषानुप्राणित** इति सङ्करः ॥ २४ ॥

**युक्तदण्डममित्राणां कृतान्तं समवर्तिनम् ।**
**दक्षिणं लोकपालं तममन्यन्त दिवौकसः ॥ २५ ॥**

**युक्तदण्डमिति** । दिवौकसो देवाः । दिवशब्दोऽपि स्वर्गवाचकोऽस्ति । तथा च प्रयोगः सुभूतिचन्द्रेणोदाहृतः । 'न शोभते तेन विना सदा पुर मरुत्वता वृत्रवधे यथा दिवम् ।' इति । ततश्च दिवमोको येषामिति

विग्रहेण वृद्धिः । 'त्रिदिवेशा दिवौकसः ।' इति नामलिङ्गानुशासनेऽपि । युक्तदण्डं तत्तदपराधोचितदमनम् । अमित्राणां शत्रूणाम् । कृतान्तं कृतविनाशम् । समवर्तिनं प्रजासु समवर्तनशीलम् । दक्षिण राज्यशासने प्रवीणम् । लोकपालं नरलोकपालम् । अमन्यन्त मन्यन्ते स्म बहुमेनिर इत्यर्थः । दक्षिणं लोकपालमित्यनेन वैवस्वतमित्यपि प्रतीयते । तत्र पक्षे, युक्तः समेतो दण्डाख्य आयुधविशेषो यस्मिन्निति योज्यम् । कृतान्तं समवर्तिनमित्यनयोस्तु पूर्ववदेवार्थः । विशिष्टनामनी चैते वैवस्वतस्य । एवं वर्णनीयराजान्वयिन एवार्थद्वयस्य प्रतीतेः **श्लेषालङ्कारः** । द्वितीयार्थे युक्तदण्डत्वादिलिङ्गेन दक्षिणलोकपालत्वमनुमीयत इत्य**नुमानालङ्कारः** ॥ २५ ॥

**यशःप्रसूनसुरभिर्यदुसन्तानपादपः ।**
**बभूव विबुधप्रीत्यै बहुशाखः क्षमातले ॥ २६ ॥**

'**यश इति** । यशांस्येव प्रसूनानि तैस्सुरभिः सुगन्धिः । प्रसवगन्धेनेव यशःप्रसरणेन दूरेऽपि ख्याप्यमानत्वात् सुगन्धित्वारोपः । बहुशाखः बह्वयः शाखाः वेदप्रभेदा यस्यस तथोक्तः अनेकवेदशाखाध्यायीति यावत् । पादपपक्षे बहुविटपः । यदुसन्तानपादपः यदुरेव सन्तानाख्यः सुरद्रुमविशेषः, महावदान्यत्वात् । क्षमातले भूतले । तलशब्दः स्वरूपवाची । 'तलं स्वरूपाधरयोः' इति विश्वः । विबुधप्रीत्यै विदुषां प्रीत्यै । बभूव । प्रसिद्धो हि सन्तानपादपो दिवि विबुधानां देवानां प्रीत्यै भवति । अयं तु भुवि विबुधानां प्रीत्यै बभूवेति विशेष इति भावः । यद्वा यदुवंशपरत्वेनायं श्लोको योज्यः । तत्र पक्षे, यदुसन्तान एव सन्तानपादप इति सन्तानपदे श्लेषः बहुशाख इति च । तत्र वृष्ण्यन्धकभोजाद्यनेकावान्तरसन्ततिप्रभेद इत्यर्थः, शाखाशब्दस्योपचारात् अवान्तरसन्ततिषु वृत्तेः । यशः-

प्रसूनेत्यत्र रूपकसमासः, सौरभानुगुण्यात् । तदुत्थापितं च विबुधादिशब्दैः श्लिष्टरूपकमिति **श्लिष्टाश्लिष्टरूपकद्वयसङ्करः** ॥ २६ ॥

**वंशे समभवत्तस्य वसुदेवः क्षितीश्वरः ।**
**जनकः प्राग्भवे योऽभूद्देवदानवयूथयोः ॥ २७ ॥**

**वंश इति** । तस्य यदोः । वशे । वसुदेवः क्षितीश्वरः वसुदेवाख्यो राजा । समभवत् संभूतः । यः । प्राग्भवे पूर्वजन्मनि । देवदानवयूथयोः देवानां दानवानां च समूहयोः । 'यूथ तिर्यक्समूहेऽपि बृन्दमात्रेऽपि भाषितम् ।' इति विश्वः । जनकोऽभूत् पिता बभूव । पुरा किल काश्यपः सुरभेरदितेश्च स्वपत्न्योरनुरोधेन वरुणस्य यज्ञगवीर्हृत्वा ब्रह्मणश्शापात् रोहिणीदेवकीरूपाभ्यां ताभ्यां सह स्वय वसुदेवरूपेण मनुष्यलोके जात इति हरिवशे कथा ॥ २७ ॥

**आनकानां च दिव्यानां दुन्दुभीनां च निस्वनैः ।**
**सह जातं यमाचख्युराख्ययानकदुन्दुभिम् ॥ २८ ॥**

**आनकानामिति** । आनकानां पटहानाम् । दुन्दुभीनां भेरीणां च । 'आनकः पटहोऽस्त्री स्याद्भेरी स्त्री दुन्दुभिः पुमान्' इत्यमरः । निस्वनैः ध्वनिभिः । सह जातम् । य वसुदेवम् । आख्यया नाम्ना । आनकदुन्दुभिम्, आचख्युः अकथयन् । वृद्धा इति शेषः ॥ २८ ॥

**तेन निर्मलसत्वेन विनिवृत्तरजस्तमाः ।**
**जगती शान्तमोहेव धर्मोच्छ्वासवती बभौ ॥ २९ ॥**

**तेनेति** । निर्मलं अकलङ्कं सत्वं सत्वगुणो यस्य तेन । तेन वसुदेवेन हेतुना । विनिवृत्तरजस्तमाः अपगतरजस्तमोगुणा । तेन कर्त्रा विनिव

र्तितरजस्तमोगुणेति वा । अत एव, धर्मोच्छ्वासवती धर्माभिवृद्धिमती । जगती भूमिः । 'जगती विष्टपे मह्याम्' इति विश्वः । शान्तमोहेव ततः पूर्वं मूर्छामनुभूय तदानीमपगतमूर्छेव । बभौ । मूर्छितो हि स्तब्धश्वासो मूर्छात्यये सत्युच्छ्वसितीति भावः ॥ २९ ॥

**स विष्णुरिव लोकानां तपनस्तेजसामिव ।**
**समुद्र इव रत्नानां सतामेकाश्रयोऽभवत् ॥ ३० ॥**

**स इति** । स वसुदेवः । लोकानां विष्णुरिव । तेजसां तपन इव । रत्नानां समुद्र इव च । सतां सज्जनानाम् । एकः आश्रयः अभवत् । सकलसाधुजनोपजीव्योऽभवदित्यर्थः । **मालोपमालंकारः** ॥ ३० ॥

**प्रख्यातविभवे पत्न्यौ तस्य पूर्वं प्रजापतेः ।**
**रोहिणीदेवकीरूपे मनुष्यत्वे बभूवतुः ॥ ३१ ॥**

**प्रख्यातेति** । पूर्वं प्रजापतेः काश्यपप्रजापतिरूपस्य । तस्य । प्रख्यातविभवे प्रसिद्धमाहात्म्ये । पत्न्यौ सुरभिरादितिश्चेत्युभे भार्ये । मनुष्यत्वे मनुष्यभावे । रोहिणीदेवकीरूपे । बभूवतुः ॥ ३१ ॥

**अक्षुद्रगतिशालिन्योस्तयोरन्योन्यसक्तयोः ।**
**ऐकरस्यमभूत्पत्या गङ्गायमुनयोरिव ॥ ३२ ॥**

**अक्षुद्रेति** । अक्षुद्रगतिशालिन्योः अक्रूरबुद्धिशालिन्योः । शाल गताविति धातोस्ताच्छीलिको णिनिः । नदीपक्षे अनल्पप्रवाहगमनभाजोरित्यर्थः । 'क्षुद्रस्स्यादधमक्रूरकृपणाल्पेषु वाच्यवत् ।' इति विश्वः । 'गतिस्तु गमने मार्गे दशायां बुद्ध्युपाययोः' इति रत्नमाला । अन्योन्यसक्तयोः अन्योन्यानुरक्तयोः, नदीपक्षे अन्योन्यसंसृष्टयोः । तयोः देवकीरोहिण्योः ।

गङ्गायमुनयोरिव । पत्या वसुदेवेन सह । ऐकरस्यं तुल्यरागत्वं अभूत् । नदीपक्षे समुद्रेण सह एकोदकत्वं लवणरसैक्यं वा । 'रसो गन्धे रसास्वादे तिक्तादौ विषरागयोः । शृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुपारदे ।' इति विश्वः । **उपमालंकारः** ॥ ३२ ॥

**स ताभ्यामनुरूपाभ्यां समतुष्यत्समेयिवान् ।**
**व्यक्तिहेतुरभूद्येन सपर्यङ्कस्य शार्ङ्गिणः ॥ ३३ ॥**

**स इति** । स वसुदेवः । अनुरूपाभ्यां शीलवृत्तादिभिः सुसदृशीभ्याम् । ताभ्यां रोहिणीदेवकीभ्याम् । समेयिवान् समेतस्सन् । 'उपेयिवाननाश्वान्' इत्यत्र उपसर्गग्रहणस्यातन्त्रत्वात् सम्पूर्वस्यापीणः क्वसुनिपातः । समतुष्यत् सन्तुष्टोऽभवत् । येन रोहिणीदेवकीसमवायेन । सपर्यङ्कस्य शेषपर्यङ्कसहितस्य । शार्ङ्गिणः शेषशायिनः । व्यक्तिहेतुः प्रादुर्भावे हेतुः । अभूत् ॥ ३३ ॥

**अलिप्सत न साम्राज्यं सोऽर्थकामपराङ्मुखः ।**
**यदृच्छागतमैश्वर्यमानृण्यरुचिरन्वभूत् ॥ ३४ ॥**

**अलिप्सतेति** । अर्थकामपराङ्मुखः अर्थकामयोः पुरुषार्थयोर्विमुखः, धर्ममोक्षपरत्वात् । स वसुदेवः । साम्राज्य सम्राजो मण्डलेश्वरस्य भाव राज्याधिपत्यम् । नालिप्सत लब्धुं नैच्छत् । 'येनेष्ट राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राड्' इत्यमरः । आनृण्यरुचिः 'यज्ञेन देवेभ्यः प्रजया पितृभ्यः' इति श्रौतमृणं नास्ति यस्य सोऽनृणः तस्य भाव आनृण्यं तस्मिन् रुचिर्यस्य तथाभूतस्सन् । यदृच्छागतं अनियमेनागतं अयत्नेन दैवाल्लब्धम् । ऐश्वर्यम् । अन्वभूत् अभुङ्क्त । 'यदृच्छाऽनियमो भवेत् ।' इति वैजयन्ती ॥ ३४ ॥

**कयाचिदशरीरिण्या वाचा व्यवसितायतिः ।**
**देवकीं वसुदेवं च कंसः कारामयोजयत् ॥ ३५ ॥**

**कयाचिदिति** । अशरीरिण्या शरीररहितया । कयाचित् ‘ यामेनां वहसे मूढ सह भर्त्रा रथे स्थिताम् । अस्यास्तवाष्टमो गर्भः प्राणानपहरिष्यति ।’ इत्येवंरूपया । वाचा । व्यवसितायतिः व्यवसितागामिकालः निश्चितभविष्यद्वृत्तान्त इति यावत् । ‘ आयतिःस्याद्दीर्घतायां प्रभावागामिकालयोः ।’ इति रत्नमाला । एवंभूतः, कंसः । देवकीं अस्याः पतिं वसुदेवं च । कारां बन्धनागारम् । अयोजयत् अगमयत् । युजेर्गत्यर्थविवक्षायां गति बुद्धीत्यादिना द्विकर्मकत्वम् ॥ ३५ ॥

**स कालातिबलः कंसः कालनेमिरनेहसा ।**
**सर्वदैतेयसत्वानां समाहार इवोदितः ॥ ३६ ॥**

**स इति** । स कंसः । कालादन्तकादतिबलः । अनेहसा कालेन । ‘कालो दिष्टोऽप्यनेहापि’ इत्यमरः । सर्वदैतेयसत्वानां अखिलदैत्यपराक्रमाणाम् । समाहारः समुच्चय इव । उदितः कालनेमिः खलु । कालनेम्याख्यः प्राग्भगवता हतो महासुर एव कंसरूपेण निखिलासुरबलसमाहार इवाविर्भूत इत्यर्थः । अतोऽस्मिन्नीदृशी स्वसृबन्धनादिनृशंसतेति भावः ॥

**एतस्मिन्नन्तरे देवी मेरुमध्यमुपेयुषः ।**
**प्रजापतिमुखान् देवान् प्राह सागरमेखला ॥ ३७ ॥**

**एतस्मिन्निति** । एतस्मिन्नन्तरे अवसरे । सागरमेखला समुद्ररशना । देवी धरित्री । मेरुमध्यम् । उपेयुषः प्राप्तवतः । प्रजापतिमुखान् चतुर्मुखप्रभृतीन् । देवान् । प्राह वक्ष्यमाणमुवाच । ‘आहेत्युवाचार्थे विभक्ति-

प्रतिरूपकमव्ययम् ।' इति शाकटायनः। तत्र 'कुगतिप्रादयः।' इति समासः। अतो नेद ब्रूञो लटि रूपमिति न स्मशब्दापेक्षा ॥ ३७ ॥

**विदितं भवतां देवा विश्वरूपेण विष्णुना ।**
**महीयान् धर्मशीलेषु भारो यत्तन्निवेशितः ॥ ३८ ॥**

**विदितमिति** । हे देवाः। भवतां विदित भवद्भिरवगम्यते तत्। विश्वरूपेण विश्वविग्रहेण । विष्णुना। महीयान् भारः पर्वतादिभारेभ्योऽतिशयेन महान् महीयान् भारः। धर्मशीलेषु धर्मस्वभावेषु धार्मिकेषु। निवेशित इति यत्, तत् भवतां विदितमिति पूर्वेण सम्बन्धः। यत्पदस्योत्तरवाक्यगतत्वात् पूर्ववाक्ये तत्पदाप्रयोगः । यत्तदित्यत्र तच्छब्दस्तु न यत्पदप्रतिनिर्देशरूपः। किन्तु 'गोभिर्विप्रैश्च वेदैश्च सतीभिस्सत्यवादिभिः। दातृभिर्धर्मशीलैश्च सप्तभिर्धार्यते मही।' इत्यादिप्रसिद्धिपरामर्शी। यत्पदसन्निहितस्य तच्छब्दस्यानुवादकोटिनिवेशेन प्रसिद्धिपरामर्शकत्वनियमात्। तदुक्त काव्यप्रकाशिकायाम्। 'यच्छब्दस्य निकटे स्थितः तच्छब्दः प्रसिद्धि परामर्शयति' इति । विदितमित्यत्र 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः। 'क्तस्य च वर्तमाने।' इति तद्योगेन भवतामिति षष्ठी। 'द्विवचनविभज्योपपदे तरबीयसुनौ।' इति महच्छब्दादीयसुन्प्रत्ययः । यद्यप्यत्र विभज्यमुपपदं नोपात्तम् । तथापि बुद्धिस्थ प्रतियोगिनमपेक्ष्यातिशयविवक्षायां प्रत्ययः। 'बौद्धप्रतियोग्यपेक्षायामप्यातिशायिनिकाः' इति वामनोक्तेः ॥ ३८ ॥

**अधर्मनिघ्नैरधुना धर्मसेतुविभेदकैः ।**
**असङ्ख्यैरद्भुतैस्तुङ्गैः क्रम्ये राक्षसपर्वतैः ॥ ३९ ॥**

**अधर्मेति** । अधुना इदानीम्। अधर्मनिघ्नैः अधर्माधीनैः तत्प्रेरितैः।

अत एव, धर्मसेतुविभेदकैः धर्ममर्यादाभञ्जकैः । असख्यैः सख्यारहितैः निष्परिपन्थितया संख्येन युद्धेन रहितैर्वा । 'एकत्वादौ विचारे च सख्या सख्यं तु संयुगे ।' इति रत्नमाला । तुङ्गैः शौर्येणोन्नतैः । अद्भुतैः आश्चर्यभूतैः । राक्षसपर्वतैः । क्रम्ये कान्ता भवामि । क्रमेः कर्मणि लडुत्तमपुरुषः । यद्यपि धर्मसेतुविभेदकैरित्यत्रषष्ठीसमासस्य 'कर्तरि च' इति प्रतिषेधोऽस्ति, तथापि याजकादेराकृतिगणत्वेन केचिदीदृशप्रयोग समर्थयन्ते । अन्ये तु समासनिषेधः कृद्योगलक्षणषष्ठीविषय इति शेषषष्ठ्या समासमुपपादयन्ति । षष्ठीसमासप्रतिषेधकाण्डारम्भ स्वरविषय इति मुनीतिकीर्त्याख्यवृत्तिकारः ॥ ३९ ॥

**अत आलोचितजगद्धितैस्सुरगणैस्स्वयम् ।**
**न पतामि न भिद्ये च यथाहं क्रियतां तथा ॥ ४० ॥**

**अत इति** । अतः अस्माद्धेतोः । आलोचितजगद्धितैः चिन्तितलोकहितैः । सुरगणैः । अह यथा अतिभारान्न पतामि, न च भिद्ये स्वयमेव भिन्ना च न भवामि । कर्मकर्तरि यकप्रत्यय । तथा क्रियतामिति प्रार्थनायां लोट ॥ ४० ॥

**इति ते भूतधारिण्या निसृष्टार्था दिवौकसः ।**
**अविदुस्तत्प्रियस्यैव तद्भारहरणं क्षमम् ॥ ४१ ॥**

**इतीति** । भूतधारिण्या धरित्र्या । इति उक्तप्रकारेण । निसृष्टार्थाः न्यस्तार्था निवेदितप्रयोजनाः । ते दिवौकसो देवाः । तत्प्रियस्य तस्या धरित्र्याः प्रियस्य नारायणस्यैव । तद्भारहरणम् । क्षमं शक्यम् । अविदुः अचिन्तयन् । 'विद ज्ञाने' इति धातोर्लङ । 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुसादेशः ॥ ४१ ॥

पुरस्कृत्य जगद्धात्रीं मनसोऽपि पुरःसराः ।
दुग्धोदधिशयं देवं दूरमेत्याभितुष्टुवुः ॥ ४२ ॥

**पुरस्कृत्येति** । देवाः, जगद्धात्रीं भूमिम् । पुरस्कृत्य । मनसो मानसस्यापि । पुरस्सराः ततोऽपि रंहस्विनः सन्तः । दूर एत्य क्षीराब्धेरुत्तरतटपर्यन्त गत्वा । दुग्धोदधिशय क्षीराब्धौ शयानम् । देव पुरुषोत्तमम् । अभितुष्टुवुः अभितो नानाविधैः स्तुवन्ति स्म ॥ ४२ ॥

त्रिवेदीमध्यदीप्ताय त्रिधाम्ने पञ्चहेतये ।
वरदाय नमस्तुभ्यं बाह्यान्तरहविर्भुजे ॥ ४३ ॥

**त्रिवेदीति** । त्रयाणां वेदानां समाहारः त्रिवेदी तस्या मध्ये दीप्ताय प्रतिपाद्यतया प्रकाशमानाय । 'मतिबुद्धिपूजार्थेभ्यश्च' इति चकाराद्वर्तमाने क्तः । पञ्चहेतये पञ्च हेतयः शङ्खचक्रगदाखड्गशार्ङ्गरूपाण्यायुधानि यस्य तस्मै । वरदाय भक्तानामीप्सितप्रदाय । बाह्यान्तरहविर्भुजे बाह्य हविः चरुपुरोडाशसान्नाय्यादि, आन्तरं प्रपदनाख्ये यजने होमद्रव्य जीवरूप हवि', तदुभय भुङ्क्त इति तथोक्तः, एवभूताय । त्रिधाम्ने पुरुषोत्तमाय । तुभ्य नमः । त्रीणि धामानि दुग्धाम्बुधिरविमण्डलपरमपदरूपाणि स्थानान्यस्येति त्रिधामशब्दो भगवद्वाची । 'त्रिधामा केशवेऽनले' इति वैजयन्ती । ततश्च त्रिधाम्न इत्यनेन अग्निरिति प्रतीयते , ततो वैलक्षण्यपराणि विशेषणानि । स हि पशुसोमयोः उत्तरस्यामुत्तरवेद्या मध्ये दीप्यते । सप्तहेतिश्च । 'काली कराली च मनोजवा च' इत्यादिना ज्वालासप्तकश्रुतेः । 'रवेरर्चिश्च शस्त्रञ्च वह्निज्वाला च हेतयः ।' इत्यमरः । श्रीमात्रपदश्च, 'श्रियमिच्छेद्धुताशनात् ।' इति स्मृतेः । बाह्यमेव च हविर्भुङ्क्त इति । एव प्रकरणात् पुरुषोत्तमपरेणापि विशेष्येणाप्रकृते पावके प्रत्याय्यमाने विशे-

षणबलात्तस्य ततो वैलक्षण्य व्यज्यत इति• शब्दशक्तिमूलो **व्यतिरेकालङ्कारध्वनिः** ॥ ४३ ॥

**अनन्याधीनमहिमा स्वाधीनपरवैभवः ।**
**दयाधीनविहारस्त्वं प्रणतान् परिपाहि नः ॥ ४४ ॥**

**अनन्येति** । अन्यस्मिन्नधीनोऽन्याधीन', वैषयिकाधिकरणे सप्तमी । सप्तमीति योगविभागात् समासः । 'अधीनो निघ्न आयत्तः' इत्यमरः । यद्वा अन्यस्मिन् स्वामिन्यधीति विग्रहे 'सप्तमीशौण्डैः' इति समासः । अधिशब्दस्य शौण्डादिषु पाठात् । अध्युत्तरपदत्वात् 'अषडक्षाशितग्वलङ्कर्मालपुरुषाध्युत्तरपदात् खः ।' इति स्वार्थे खप्रत्ययः । उभयथापि परतन्त्र इत्यर्थः । इयमेव स्वाधीनादिपदेष्वपि व्याख्या । अन्याधीनो न भवतीत्यनन्याधीनः, तादृशो महिमा यस्य । स्वाधीन परेषां ब्रह्मादीनां वैभव यस्य । दयाधीनो विहारो रावणवधादिरूपो व्यापारः यस्य । एवभूतः, त्वम् । प्रणतान् । न. अस्मान् । परिपाहि परितो रक्ष । प्रणतानपि न निर्दयो रक्षतीत्यत उक्त दयाधीनेति । कसादिनिग्रहेण लोकरक्षणे भगवत एव प्रार्थनायां हेतुगर्भविशेषण स्वाधीनेति । अन्यैः कसादिनिग्रहः क्रियतेचेदपि त्वत्प्रसादलभ्यां शक्तिमपेक्ष्य कर्तव्यः । अतो भिक्षितभिक्षण विहाय 'एकाहाद्वा तेषां समत्वात् स्यात् ।' इति न्यायेन त्वमेव प्रार्थनीयो नान्य इत्यभिप्रायः । यदि भगवद्वैभवमप्यन्याधीन स्यात् तर्हि तेनैव न्यायेन स एव प्रार्थनीयो भवेत् न च तथेत्याशयेनोक्तमनन्याधीनेति ॥ ४४ ॥

**स भवान्गुणरत्नौघैर्दीप्यमानो दयाम्बुधिः ।**
**तनोति व्यूहविभवैस्तरङ्गैरिव ताण्डवम् ॥ ४५ ॥**

**स इति** । गुणाः ज्ञानशक्तिबलैश्वर्यादय एव रत्नानि तेषामोघैः

समूहैः। दीप्यमानः प्रकाशमानः। दयाम्बुधिः कृपाश्रयः समुद्र इव विपुलाधारः, समुद्ररूपो वा। भवान्। व्यूहविभवैः व्यूहाः वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाः, विभवाः रघुनाथाद्यवताराः तैः। तरङ्गैः ऊर्मिभिरिव। ताण्डव नटनं तथा तथाभिनयनम्। समुद्रपक्षे तु उल्ललनम्। तनोति। भवच्छब्दप्रयोगेण युष्मदुपपदस्य स्थानिनोऽप्यभावात् 'शेषे प्रथमः' इति प्रथमपुरुषनिर्देशः। अनेन दयालोस्तव भक्तरक्षणायावतारादिपरिग्रहः स्वाभाविक इति इदानीमपि रक्षणायावतरितव्यमिति व्यज्यते ॥ ४५ ॥

**त्वदेकव्यञ्जितैरादौ त्वदन्येष्वनिदंपरैः।**
**निगमैरनिगम्यं त्वां कः परिच्छेत्तुमर्हति ॥ ४६ ॥**

**त्वदेकेति**। आदौ महासर्गादौ। त्वदेकव्यञ्जितैः एकेन व्यञ्जिता एकव्यञ्जिताः त्वया एकव्यञ्जिता इति शिवभागवतवत् समासः। अन्यथा त्वदेकशब्दयोः प्रथम समासे पूर्वकालैकसर्वजरत्पुराणेत्यादिना एकशब्दस्य पूर्वनिपातः स्यात्। महासर्गादौ भगवता पूर्वपूर्वकल्पप्रवृत्तानुपूर्वीविशिष्टाः वेदाः तथैवाविष्कृता इति शास्त्रमर्यादा। त्वदन्येषु। अनिदंपरैः इदं परं मुख्यं प्रतिपाद्यत्वेन प्रधानं येषां ते इदंपराः, अतथाभूतैः त्वद्व्यतिरिक्तेषु तात्पर्यपर्यवसानरहितैरित्यर्थः। 'परं दूरान्यमुख्येषु' इति रत्नमाला। इत्थंभूतैः, निगमैः वेदैः। अनिगम्यं अनिश्चेयम्। त्वाम्। कः। परिच्छेत्तुं अर्हति। 'निगमो निश्चये पुर्यां पथि वेदे वणिक्पथे' इति रत्नमाला। यो ह्येतावद्भिर्वेदराशिभिस्तदेकतात्पर्यैः प्रतिपाद्यमानोऽपि न सम्यक् परिच्छिद्यते, तमन्यः परिच्छेत्तुं न शक्नोतीति किमु वक्तव्यमिति व्यञ्जयितुं त्वदन्येष्वनिदंपरैरित्युक्तम्। यदि वेदानां कश्चिदन्यो वक्ता स्यात् तदा वक्तृदोषसंभवात् तेनैव तेषां निर्णयाशक्तत्वमन्यथासिद्धं न प्रमेयगौरवादित्याशङ्क्योक्तं त्वदेकव्यञ्जितैरिति ॥ ४६ ॥

**अमितस्य महिम्नस्ते प्रयातुं पारमिच्छताम् ।**
**वितथा वेदपान्थानां यत्रसायंगृहा गतिः ॥ ४७ ॥**

निगमैरनिगम्यत्वमेव प्रपञ्चयति— **अमितस्येति** । अमितस्य अपरिच्छिन्नस्य । ते महिम्नः त्वैद्भवस्य । (पर)पार तीरम् । प्रयातुं इच्छताम् । वेदा एव पान्थाः नित्यपथिकाः । 'पन्थो ण नित्यम्' इति णप्रत्ययः, पन्थादेशश्च । तेषां, यत्रसायगृहा यत्र सायसम :स्तदेव गृह यस्या सा । गतिः । वितथा व्यर्था । यथा पुरुषाः पुरुषायुषेणाप्यप्राप्य देश प्राप्तु प्रस्थिताः प्रतिदिवसमासाय गच्छन्तोऽपि न त देश प्राप्नुवन्ति । तथा अवाङ्मनसगोचर त्वन्महिमान प्रतिपादयितु प्रवृत्ताः वेदाः शब्दगोचरेण सर्वेण प्रकारेण प्रतिपादयन्तोऽपि न कात्स्न्येंन प्रतिपादयितु प्रभवन्तीत्यर्थः । **रूपकालङ्कारः** ॥ ४७ ॥

**नम्यस्य नमतः क्षुद्रान् वरदस्य वरार्थिनः ।**
**पुत्रैः पितृमतः क्रीडा कथं ते केन वर्ण्यते ॥ ४८ ॥**

**नम्यस्येति** । नम्यस्य सर्वलोकनमस्कर्तव्यस्य । क्षुद्रान अल्पानिन्द्रादीनपि । उपेन्द्राद्यवतारैः नमतः । वरदस्य सर्वलोकवरप्रदायकस्य । तथापि ब्रह्मादिषु, वरार्थिनः । पुत्रै काश्यपादिभि. । पितृमतः । ते तव । क्रीडा । कथ केन प्रकारेण प्रवृत्ता । केन वा पुरुषेण वर्ण्यते । अचिन्त्यस्तव क्रीडाप्रकारः । अत एव तव वर्णने न कोऽपि शक्त इत्यर्थः ॥ ४८ ॥

**नटवद्भूमिकाभेदैर्नाथ दीव्यन् पृथग्विधैः ।**
**पुंसामनन्यभावानां पुष्णासि रसमद्भुतम् ॥ ४९ ॥**

**नटवदिति** । हे नाथ । नटवत् नटेन तुल्यम् । 'तेन तुल्य क्रियाचेद्वतिः'

इति वतिप्रत्ययः। पृथग्विधैः भूमिकाभेदैः मत्स्यकूर्माद्यवतारभेदैः। 'भूमिका रचनायां स्यान्मूर्त्यन्तरपरिग्रहे।' इति विश्वः। 'तत्तद्वेषो भूमिका स्यात्' इति वैजयन्ती। दीव्यन् क्रीडन्। त्व, अनन्यभावानां अन्यो विषयत्वेन नास्ति यस्य सोऽनन्यः अनन्यो भावो येषां तेषामेकान्तिनाम्। अद्भुत संसारे अननुभूतत्वेनाश्चर्यभूतम्। रस अपवर्गानन्दम्। पुष्णासि अभिव्यञ्जयसि। त्वदवताररहस्यानुचिन्तनपरानपवर्गदानेन योजयसीत्यर्थः। नटो यथा रामाद्यनुकार्यवेषभेदैरनन्यहृदयानां सामाजिकानामद्भुताख्य रस पुष्णाति तद्वदिति भावः। **उपमालङ्कारः** ॥ ४९ ॥

**ब्रह्मादिस्तम्बपर्यन्तविचित्राङ्कुरशालिनाम्।**
**सलिलं कर्मकन्दानां क्रीडैव तव केवलम् ॥ ५० ॥**

**ब्रह्मादीति**। ब्रह्मा आदिः पूर्वः स्तम्बः तृणादि. पर्यन्त उत्तरावधिः येषां ते ब्रह्मादिस्तम्बपर्यन्ताः सर्वेऽपि प्राणिन. त एव विचित्राङ्कुराः तच्छालिनां तद्भाजाम्। कर्मकन्दानां कर्माण्येव कन्दाः सस्यमूलानि तेषाम्। केवलं तव क्रीडैव सलिलम्। त्वत्क्रीडामात्ररूपसलिलावसेकसहकृता एव कर्मकन्दा विचित्रप्रपञ्चरूपानङ्कुरान् जनयन्तीत्यर्थः। अत्र भगवत्क्रीडायां सलिलत्वारोपस्य प्रपञ्चाङ्कुरजननलक्षणप्रकृतकार्योपयोगित्वात् **परिणामालंकारः** ॥ ५० ॥

**निराधारनिजस्थेम्नो निरुपाधिकशेषिणः।**
**निरपेक्षनियन्तुस्ते निस्समाभ्यधिका गुणाः ॥ ५१ ॥**

**निराधारेति**। निराधार आधारनिरपेक्षः निज आत्मीयः स्थेमा. स्थैर्यं यस्य तस्य। निरुपाधिकशेषिणः स्वभावादेव सकलजगत्प्रधानभूतस्य। निरपेक्षं सहकार्यन्तरनिरपेक्षं यथा तथा नियन्तुः जगन्नियामकस्य। ते।

गुणाः। निरुपमाभ्यधिकाः समाभ्यधिकरहिताः। लोके हि स्थिराणां भूधरादीनां स्थैर्यमाधारसापेक्षम्, भृत्यादीन् प्रति राज्ञां शेषित्व भृतिदानाद्युपाधि प्रयुक्तम्, तेषामेव राज्यादिनियन्तृत्वममात्यादिसापेक्षम्, भगवतस्त्वनीदृशाः स्थैर्यादय इति भूधरस्थैर्यादिभ्यस्तेषामुत्कर्षरूपो **व्यतिरेकालङ्कारो** व्यज्यते। स च व्यज्यमानो निस्समाभ्यधिकत्वस्य वाच्यस्य सिध्यङ्गमिति वाच्यसिध्यङ्गनामा गुणीभूतव्यङ्ग्यभेदः। स्थिरशब्दात् 'वर्णदृढादिभ्यः ष्यञ् च' इति चकारादिमनिच्। 'प्रियस्थिर' इत्यादिसूत्रेण स्थिरशब्दस्य स्थादेशे 'प्रकृत्यैकाच्' इति प्रकृतिभावे च सति स्थेमेति रूपम्॥ ५१॥

**अनाविलधियामन्तश्चिन्तामणिरिव स्फुरन्।**
**दिशस्यभिमतं सर्वमतिरस्कार्यदीधितिः॥ ५२॥**

**अनाविलेति**। अतिरस्कार्यदीधितिः तेजोऽन्तरैरनभिभवनीयप्रकाशः। त्वम्, अनाविलधिया चिन्ताविरोधिव्यापारैरकलुषधियाम्। अन्तः हृदये। स्फुरन् प्रकाशमानः, निरन्तरचिन्ताविषयीकृतस्सन्। अभिमत अभीप्सितम्। सर्वं दिशसि। तान् संसारान्मोचयित्वा 'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरस्समुत्तिष्ठन्ति' इत्यादिमुक्तविषयश्रुत्युक्तप्रक्रियया संकल्पमात्रेण तदभिलषितं सर्वं प्रयच्छसीत्यर्थः। चिन्तामणिरिव। सोऽपि दिव्यरत्नतया तेजोऽन्तरैरनभिभवनीयप्रकाशः। चिन्तितोऽभिमतमर्थं ददाति॥ ५२॥

**संसारमरुकान्तारे परिश्रान्तस्य देहिनः।**
**त्वद्भक्त्यमृतवाहिन्यामादिष्टमवगाहनम्॥ ५३॥**

**संसारेति**। संसार एव मरुः निर्जलप्रदेशः सुखरहितत्वेन नीरसत्वात् तस्य कान्तारं दुर्गमं वर्त्म, इष्टापूर्तादिकारिणामिहामुत्र च गतागतसाधन-

धूमादिमार्गरूपम् , पापिनां तृतीयस्थानरूपा कष्टा दुर्गतिश्च । 'कान्तारं वर्त्म दुर्गमम्' इत्यमरः । तत्र, परिश्रान्तस्य गतागताभ्यां खिन्नस्य । देहिनः शरीरिणः । त्वद्भक्तिरेव अमृतवाहिनी सुधानदी तस्याम् । अवगाहनम् । आदिष्टं गतागतश्रमहरत्वेनोपदिष्टम् , 'भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ।' इत्यादावित्यर्थः । अत्र भक्तावमृतवाहिनीत्वारोपस्य संसाराध्वश्रमहरणकार्योपयोगित्वात् **परिणामालंकारः** ॥ ५३ ॥

**दुरितोदन्वदावर्ते घूर्णमानस्य दुःख्यतः ।**
**समग्रगुणसम्पन्नस्तारकस्त्वं प्लवो महान् ॥ ५४ ॥**

**दुरितेति** । दुरितमेव उदन्वान् समुद्रः तस्यावर्ते जलभ्रमे । 'स्यादावर्तोऽम्भसां भ्रमः ।' इत्यमरः । आवर्त इत्युपचाराद्दुरितपरिपाकः तस्मिन् , घूर्णमानस्य परिभ्राम्यतः । दुःख्यतः क्लिश्यतः । दुःखशब्दस्य कण्ड्वादिषु पाठाद्यक्प्रत्ययः । देहिनः शरणागतस्येति भावः । समग्राः अपरिच्छिन्ना गुणा ज्ञानशक्त्यादय एव गुणाः सूत्राणि तैः सम्पन्नः समृद्धः । त्वमेव, महान् प्लव इति **व्यस्तरूपकम्** । तारकः तारयिता । पूर्वत्र भक्तेः मुक्त्युपायत्वमुक्तम् इह तु प्रपत्तेरिति भेदः । पूर्ववत् **परिणामालङ्कारः** ॥ ५४ ॥

**अपरिच्छिद्यमानस्य देशकालादिभिस्तव ।**
**निदर्शनं त्वमेवैकस्त्वदन्यद्व्यतिरेकतः ॥ ५५ ॥**

**अपरिच्छिद्यमानस्येति** । देशकालादिभिः विभुत्वाद्देशेन नित्यत्वात् कालेन सर्वात्मकत्वात् वस्तुना चापरिच्छिद्यमानस्य । तव । त्वमेक एव । निदर्शनं दृष्टान्तः । त्वदन्यत् व्यापित्वादिना प्रसिद्धं गगनादि ।

व्यतिरेकतः । निदर्शनमित्यनुषङ्गः । गगनादिवद्देशपरिच्छिन्नो न भवतीत्यादिक्रमेण व्यतिरेकदृष्टान्तो भवतीत्यर्थः । अत्र निदर्शनं त्वमेवैक इत्येकस्यैव उपमानोपमेयभावाद्**नन्वयः** । त्वदन्यव्यतिरेकत इति गगनादितो भगवदुत्कर्षवर्णना**द्व्यतिरेकश्चे**ति नयोरन्योन्यानुप्राणितत्वेन **संकरः** ॥ ५५ ॥

**अकर्तुमखिलं कर्तुमन्यथाकर्तुमप्यलम् ।**
**सङ्कल्पसचिवः काले शक्तिलेशस्स तावकः ॥ ५६ ॥**

**अकर्तुमिति** । अखिल प्रपञ्चम् । काले तत्तदुचितसमये । अकर्तुं कर्तुं अन्यथाकर्तुमपि प्रलयेष्वकर्तुं सर्गादिषु कर्तुं मन्वन्तरभेदेषु पूर्वेन्द्राद्यधिकार विनिवर्त्य इन्द्रान्तराणां स्थापनक्रमेणान्यथाकर्तुं च । सङ्कल्पसचिवः त्वत्सङ्कल्पसहायः । 'सहायसचिवौ' इति वैजयन्ती । तावकः शक्तिलेशः त्वदीयशक्तिलेशरूपः । स काल एव । अल पर्याप्तः । त्वच्छक्तिलेश एव जगद्व्यापाराय पर्याप्तः । तव परिपूर्णशक्तिः कथ लक्ष्यत इति भावः । 'ततः कालात्मको योऽसौ तवांशः कथ्यते हरेः ।' इत्यादौ कालस्य भगवच्छक्तिलेशत्वं प्रसिद्धम् ॥ ५६ ॥

**यन्मूलमखिलं कार्यं यदमूलमधीयते ।**
**लक्ष्यं तदसि योगानां लक्ष्मीकौस्तुभलक्षणम् ॥ ५७ ॥**

**यन्मूलमिति** । अखिलं वियदादि । कार्यम् । यन्मूल यत्कारणकम् । यत् अमूलं अकारणकम् । अधीयते 'न चास्य कश्चिज्जनिता न चाधिपः' इत्याद्युपनिषत्सु । तत् लक्ष्मीकौस्तुभलक्षणं लक्ष्मीः कौस्तुभाख्यो मणिश्च चिह्न यस्य तथाभूतम् । योगानां दहरोपासनादिपराविद्यानाम् । लक्ष्य उद्देश्यं परं ब्रह्म असि ॥ ५७ ॥

**त्रिवर्गमपवर्गं वा प्रतिलब्धुं प्रयस्यताम् ।**
**प्रलयेष्वपि दीर्घायुः प्रतिभूस्त्वदनुग्रहः ॥ ५८ ॥**

**त्रिवर्गमिति** । त्रयाणां धर्मार्थकामानां वर्गः तम् । 'त्रिवर्गो धर्मकामार्थैः' इत्यमरः । अपवर्गं मोक्षं वा । प्रतिलब्धुं प्राप्तुम् । प्रयस्यतां प्रयतमानानाम् । त्वदनुग्रहः तव प्रसादः । प्रलयेष्वपि । दीर्घायुः । प्रतिभूः लग्नकः । यथा वृद्ध्याजीवाः प्रतिभुवं विश्वस्य वृद्ध्यर्थं धनं प्रयुञ्जते, तथा सन्तः त्वत्प्रसादमेव कल्पान्तरेष्वपि फलप्रदं विश्वस्य त्रिवर्गापवर्गार्थानि कर्माणि अनुतिष्ठन्ति । अग्न्यादितत्तत्कर्मदेवतानां कल्पान्तरेष्वभावादिति भावः । भगवत्प्रसादे प्रतिभूत्वारोपस्य प्रयासरूपप्रस्तुतकार्योपयोगित्वात् **परिणामालङ्कारः** ॥ ५८ ॥

**यदेकमक्षरं ब्रह्म सर्वाम्नायसमन्वितम् ।**
**तारकं सर्वजन्तूनां तत् त्वं तव च वाचकम् ॥ ५९ ॥**

**यदेकमिति** । सर्वाम्नायसमन्वितं सर्वेषु वेदेष्वाद्यन्तयोः समन्वितम् । 'ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।' इति स्मृतेः । सर्वजन्तूनाम् । तारकं भवार्णवतरणोपायभूतम् । यत् एकं अक्षरं ब्रह्म एकाक्षररूपं शब्दब्रह्म 'ओमित्येकाक्षरं ब्रह्म' इति प्रसिद्धम् । तत् । त्वम् । तव । वाचकं अभिधानं च । 'ओमिति ब्रह्म' । 'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।' इत्यादिषु प्रणवरूपतया प्रणववाच्यतया च वर्णितं परं ब्रह्म त्वमेवेत्यर्थः ॥ ५९ ॥

**त्वदालम्बितहस्तानां भवादुन्मज्जतां सताम् ।**
**मज्जतः पापजातस्य नास्ति हस्तावलम्बनम् ॥ ६० ॥**

**त्वदिति** । त्वया आलम्बितहस्तानां उद्धरणाय गृहीतहस्तानाम् । अतं

एव, भवात् संसारकूपात् । उन्मज्जताम् । सतां ब्रह्मविदाम् । 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः।' इति हि श्रुतिः । मज्जत. । पापजातस्य पापसमूहस्य । हस्तावलम्बनम् । नास्ति । अत एव सद्योन्मज्जनं नास्तीत्यर्थः । 'जात जन्मसमूहयोः' इति विश्वः । 'ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा ।' इत्युक्तरीत्या ज्ञानेन पापविनाशाभिप्रायेण, 'तत्सुकृतदुष्कृते विधूनुते । तस्य प्रिया ज्ञातयः सुकृतमुपयुञ्जन्त्यप्रिया दुष्कृतम् ।' इत्युक्तरीत्यान्यत्र निवेशनाभिप्रायेण च पापजातस्य मज्जनमुक्तम् । एतेन भगवन्त प्राप्ताना ससारबीजकर्माभावात् ब्रह्मादीन् प्राप्तानामिव पुनरावृत्तिर्नास्तीति सूच्यते ॥ ६० ॥

**अनन्यरक्षाव्रतिनं चातकव्रतचारिणः ।**
**भवन्तमवलम्बन्ते निरालम्बनभावनम् ॥ ६१ ॥**

**अनन्येति** । अनन्या एकान्तिनः तेषां रक्षैव व्रत तदस्यास्तीत्यनन्यरक्षाव्रती । सर्वधनी सर्वकेशी इत्यादिवत्कर्मधारयादपि मत्वर्थीयप्रत्ययो युक्तः । त भवन्तम् । चातकव्रतचारिणः चातका जलधरैकान्तिनः शकुन्ताः तेषां व्रतमेकान्तित्व चरितु शीलमेषामिति तथोक्ताः त्वदेकनियताः । निरालम्बनभावन निरालम्बना भक्तियोगाद्युपायान्तरालम्बनरहिता भावना मनोव्यापारो यस्मिन् कर्मणि तद्यथा तथा, उपायान्तरनिराशमिति यावत् । अवलम्बन्ते प्रपद्यन्ते । उपायान्तरनैराश्यरूपस्याकिञ्चन्यस्य प्रपदनाधिकारिविशेषणत्वान्निरालम्बनभावनमित्युक्तम् ॥ ६१ ॥

**अनिदंपूर्वनिद्राणामनस्तमयभानुमान् ।**
**आपादयसि पुंसां त्वमपुनस्स्वापजागरम् ॥ ६२ ॥**

**अनिदमिति** । अनिदंपूर्वा अनादिकालप्रवृत्ता निद्रा संसृतिर्येषां तेषाम् ।

पुंसाम् । अनस्तमयभानुमान् अस्तमयरहितसूर्यः । त्वम् । अपुनस्स्वापजागरं पुनरावृत्तिरहितमपवर्गम् । आपादयसि । यथा उद्यन् भास्वान् निद्रितान् प्रबोधयति । एवं त्वं हृदये स्फुरन् संसारिणो मोचयसीत्यर्थः । अत्र संसारापवर्गयोः जीवस्य स्वरूपातिरोभावाविर्भावाभ्यां तौ निद्राजागरभावेनाध्यवसीयेते इति **अतिशयोक्तिः** । भगवति भानुत्वारोपस्य जागरापादनरूपप्रकृतकार्योपयोगात् **परिणामः** । तत्र चानस्तमयत्वं विशेषणं सूर्यास्तमयानन्तरभाविपुनस्स्वापराहित्ये हेतुरिति **पदार्थहेतुकं काव्यलिङ्ग**मित्येतेषां **सङ्करः** । तेन च प्रसिद्धभानुमतो **व्यतिरेको** व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥ ६२ ॥

**त्वदेकशरणानां त्वं शरणागतजीवनः ।**
**विपदं नः क्षिप क्षिप्रं तमिस्रामिव भास्करः ॥ ६३ ॥**

**त्वदेकेति** । शरणागतान् जीवयतीति शरणागतजीवनः त्राता । त्वम् । त्वदेकशरणानां त्वं एकः शरणं रक्षिता येषां तेषाम् । नः अस्माकम् । 'शरणं गृहरक्षित्रोः' इत्यमरः । विपदम् । तामिस्रां अन्धकारम् । भास्कर इव । क्षिप्रं शीघ्रम् । क्षिप निराकुरु । 'अथ ध्वान्ते तामिस्रं स्यात्तमिस्रा चान्धमद्वयोः ।' इत्यमरशेषः ॥ ६३ ॥

**सति सूर्ये समुद्यन्तः प्रतिसूर्या इवासुराः ।**
**जगद्बाधाय जायन्ते जहि तान् स्वेन तेजसा ॥ ६४ ॥**

**सतीति** । सूर्ये । सति विद्यमाने । समुद्यन्तः । प्रतिसूर्या इव । असुराः कंसादिरूपिणः । जगतां बाधाय जायन्ते उपद्रवाय संपद्यन्ते । प्रतिसूर्या अप्यौत्पातिकत्वादुपद्रवकरा भवन्ति । स्वेन तेजसा प्रभावेन । सूर्यपक्षे ज्योतिषा । तान् । जहि संहर । 'हन्तेर्जः' इति जादेशः ॥ ६४ ॥

**स दैत्यहत्यामिच्छद्भिस्सुरैरेवमभिष्टुतः ।**
**अनन्यदृश्यस्सहसा दयया दर्शनं ददौ ॥ ६५ ॥**

**स इति** । दैत्यहत्यां असुराणां हननम् । 'हनस्त च' इति हन्तेर्भावे क्यप् तादेशश्च । तां, इच्छद्भिः सुरैः । एव उक्तप्रकारेण अभिष्टुतः । अनन्यानां एकान्तिनां दृश्यः । सः पुरुषोत्तमः । सहसा अतर्कितम् । 'अतर्किते तु सहसा' इत्यमरः । दयया । दर्शन ददौ तेभ्यो दर्शन प्रायच्छन् । तेषां पुरस्तादाविर्भूत इत्यर्थः ॥ ६५ ॥

**ततस्तं ददृशुर्देवाः शेषपर्यङ्कमास्थितम् ।**
**अधिरूढशरन्मेघमन्यादृशमिवाम्बुदम् ॥ ६६ ॥**

**तत इति** । ततः तदाविर्भावानन्तरम् । देवा ब्रह्मादयः । शेष एव पर्यङ्को मञ्चः तम् । आस्थित अधिरूढम् । तिष्ठतेरुपसर्गभेदेनार्थभेदात् सकर्मकता । अत एव, अधिरूढशरन्मेघम् । अन्यादृश विलक्षण लोकोत्तरम् । अम्बुद अम्बुवाहमिव स्थितम् । तम् । ददृशुः । अत्र **संभावनारूपोत्प्रेक्षा** ॥ ६६ ॥

**पत्न्या सहनिषेदुष्या पद्मलक्षणलक्ष्यया ।**
**स्वेच्छयैव शरीरिण्या सूचितैश्वर्यसंपदम् ॥ ६७ ॥**

**पत्न्येति** । सहनिषेदुष्या शेषपर्यङ्के स्वेन साकं निषण्णया । 'भाषायां सदवसश्रुवः' इति क्वसुः । पद्ममेव लक्षणं चिह्नं तेन लक्ष्यया दृश्यया पद्महस्तया । स्वेच्छयैव कर्मवश्यतां विना स्वेच्छामात्रेण । शरीरिण्या । पत्न्या श्रीमहालक्ष्म्या । सूचिता ऐश्वर्यसंपत् परभावरूपैश्वर्यप्रकर्षः यस्य तम् । इत आरभ्य श्लोकसप्तकस्य ददृशुरिति पूर्वेण संबन्धः । 'ह्रीश्च

ते लक्ष्मीश्च पत्न्यौ' इति परं ब्रह्माधिकृत्य श्रवणात् लक्ष्मीपतित्वं परभावलिङ्गमिति भावः ॥६७॥

**सुकुमारसुखस्पर्शसुगन्धिभिरलंकृतम् ।**
**स्वविग्रहगुणारामप्रसूनैरिव भूषणैः ॥ ६८ ॥**

**सुकुमारेति** । सुकुमाराणि कोमलानि, सुखः सुखकरः स्पर्शः एषामिति सुखस्पर्शानि तत्तत्कालसुखदायिस्पर्शविशेषयुक्तानि, 'सुखहेतौ सुखे सुखम् ।' इति शब्दार्णवः । शोभनो गन्धो येषामिति सुगन्धीनि 'गन्धस्येदुत्पूतिसुसुरभिभ्यः' इति इत्समासान्तः । तैरिति खञ्जकुब्जवद्विशेषणसमासः । स्वविग्रह एव गुणानामाराम उपवन तस्य प्रसूनैरिव स्थितैः । भूषणैः दिव्याभरणैः । अलकृतमिति **रूपकोत्थापितोत्प्रेक्षालंकारः** ॥ ६८ ॥

**आरञ्जितजगन्नेत्रैरन्योन्यपरिकर्मितैः ।**
**अङ्गैरमितसौन्दर्यैरनुकल्पितभूषणम् ॥ ६९ ॥**

**आरञ्जितेति** । आरञ्जितजगन्नेत्रैः अनुरक्तीकृतलोकलोचनैः । अन्योन्यपरिकर्मितैः परस्परेण संजातप्रसाधनैः । परिकर्मशब्दादितच्प्रत्ययः, तारकादेराकृतिगणत्वात् । विशेषणद्वयेऽपि निमित्त अमितसौन्दर्यैः अमिताभिरूप्यैः । अङ्गैः अनुकल्पितभूषण अमुख्यकल्पीकृताभरणम् । आभरणेभ्योऽप्यङ्गानामेव परस्परमतिशयितशोभावहत्वादितिभावः । 'मुख्यः स्यात् प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः' इत्यमरः । अत्राङ्गविशेषणं भूषणानामनुकल्पितत्वे हेतुभाव भजत इति **पदार्थहेतुकं काव्यलिङ्गमलङ्कारः** ॥ ६९ ॥

**उत्तेजितजयोत्साहमायुधैरनघोद्यमैः ।**
**शौर्यविक्रमशक्त्याद्यैस्सहजैः स्वगुणैरिव ॥ ७० ॥**

**उत्तेजितेति** । अनघोद्यमैः अवितथोद्योगैः । अहोदुःखव्यसनवाचिनोऽघशब्दस्य तत्र तत्रोचिते दोषान्तरं लक्षणा । शौर्यविक्रमशक्त्याद्यैः शौर्यं बलं विक्रमः शौर्यस्य विषयेषु प्रयोगः 'विक्रमः शौर्यकरणं' इति वैजयन्ती । शक्तिः सामर्थ्यं तदाद्यैः तत्प्रभृतिभिः । सहजैः स्वभावसिद्धैः । 'सहजं निजमाजानम्' इति स्वभावपर्यायेषु वैजयन्ती । स्वगुणैः आत्मीयगुणैरिव स्थितैः । आयुधैः सुदर्शनादिभि । उत्तेजितजयोत्साह आयुधदर्शनादुत्कटीभूतासुरजयोद्योगमित्यर्थः ॥ ७० ॥

**स्वकान्तिजलधेरन्तस्सिद्धसंहननं स्वतः ।**
**महिम्ना जातवैचित्र्यं महानीलमिवोदितम् ॥ ७१ ॥**

**स्वकान्तीति** । स्वकान्तिरेव जलधिः तस्य । अन्तः मध्ये । स्वतः सिद्धसंहननं स्वत एव कर्मायनधीनतया सपन्नवपुषम् । 'गात्र वपुस्संहननम्' इत्यमरः । महिम्ना माहात्म्येन । कस्य चिन्निर्माण विना स्वत एव. जातवैचित्र्यं सपन्नकरणवर्णाद्याकारवैचित्र्यम्, निर्माणे तादृशाभिरूप्य न संभवतीति भावः । उदित उद्भूतम् । महानील इन्द्रनीलमणिविशेषमिव स्थितम् । सोऽपि जलधिमध्ये सिद्ध्यतीति भावः । **उत्प्रेक्षालङ्कारः** । सिंहलस्याकरे जाता महानीला इति स्मृताः ।' इति रत्नशास्त्रम् ॥ ७१ ॥

**श्रुतिरूपेण वाहेन शेषकङ्कणशोभिना ।**
**स्वाङ्घ्रिसौरभदिग्धेन दत्तसंग्रामदोहलम् ॥ ७२ ॥**

**श्रुतिरूपेणेति** । शेषरूपेण कङ्कणेन शोभत इति शेषकङ्कणशोभी तेन ।

स्वाङ्घ्रिसौरभदिग्धेन वहनकालसंक्रान्तभगवच्चरणामोदरूषितेन । श्रुतिरूपेण वेदरूपेण । वाहेन सुपर्णेन । 'सुपर्णोऽसि गरुत्मान् त्रिवृत्ते शिरः' इत्यादिना तस्य वेदमयत्वश्रुतेः । दत्तसङ्ग्रामदोहल दत्तयुद्धाभिलाषम् । गरुडदर्शनादेव सञ्जातदैत्ययुद्धाभिलाषमित्यर्थः । 'दोहल दोहदं छन्दः' इति इच्छापर्यायेष्वमरशेषः ॥ ७२ ॥

**स्ववेत्रस्पन्दनिस्पन्दनेतव्येन निवेदितम् ।**
**भक्तिनम्रेण सेनान्या प्रतिशृण्वन्तमिङ्गितैः ॥ ७३ ॥**

**स्ववेत्रेति** । स्ववेत्रस्य करधृतस्य स्पन्देन चलनेन निस्पन्दाः निश्चलाः नेतव्याः देवसमीप प्रापणीयाः यस्य तेन, देवाय तत्तत्कार्यं निवेदयितु तत्समीप नीयमानान् अहमहमिकयोपर्युपर्यापततः तद्वारणायाज्ञासामर्थ्यात् स्ववेत्रचलनमात्रेण निश्चलीकुर्वतेत्यर्थ. । निस्पन्देति पाठः, षत्वलक्षणाभावात् । उक्तञ्च वामनेन 'निष्पन्द इति षत्व चिन्त्यम्' इति । भक्तिनम्रेण भक्त्या प्रह्वेन । सेनान्या विष्वक्सेनेन । निवेदितं विज्ञापितं प्रयोजनम् । इङ्गितैः भ्रूसञ्ज्ञाभिः । प्रतिशृण्वन्तं दास्यामीति प्रतिजानन्तम् । प्रतिपूर्वकश्रुधातुर्याचितार्थदानप्रतिज्ञावाची । अत्र प्रभोर्निकटे वेत्रधरक्रियास्वभावस्य प्रभोर्निवेदितार्थप्रतिश्रवक्रियास्वभावस्य च सूक्ष्मस्य वर्णनात् **स्वभावोक्तिरलङ्कारः** ॥ ७३ ॥

**अनपायं तमादित्यमक्षयं तारकाधिपम् ।**
**अपारममृताम्भोधिममन्यन्त दिवौकसः ॥ ७४ ॥**

**अनपायमिति** । दिवौकसः । तं भगवन्तम् । अनपायं आदित्यं अस्तमयरहितं सूर्यम् । अक्षयं तारकाधिपं क्षयरहितं चन्द्रमसम् । अपारं अमृताम्भोधिं पाररहितं सुधासमुद्रं च अमन्यन्त । देवस्यातिश-

यितं तेजः प्रसाद आभिरूप्येण परमानन्दरूपतया चास्वादनीयता च पश्यन्तो नित्योदितत्वनित्यैकरूपत्वापरिच्छिन्नत्वानि चादित्याद्वैलक्षण्यानि, विमृशन्तास्त्रिदशाः अस्तमयरहितोऽयं कश्चिदन्यादृशादित्य इत्यादिक्रमेण मेनिर इत्यर्थः । अत्र नानार्थबलादेकस्यैव नानारूपेणोल्लेखादुल्लेखालङ्कारः ॥ ७४ ॥

**अभयोदारहस्ताग्रमनघस्वागतस्मितम् ।**
**अवेक्ष्य विबुधा देवमलभन्त दृशोः फलम् ॥ ७५ ॥**

**अभयेति** । विबुधा देवाः । अभयेन अभयमुद्रया उदार ख्यात हस्ताग्रं यस्य । 'उदारो महति ख्याते' इति वैजयन्ती । अनघ अघविरोधि दर्शनमात्रेण सकलदुःखापहारि स्वागतस्मित कुशलप्रश्नरूपमन्दस्मित यस्य । 'कर्तव्येऽतिप्रियालापे स्वागत कुशल मतम् ।' इति शब्दार्णवः । तं देवं अवेक्ष्य । दृशोः फल अलभन्त । बहुत्वेऽपि नयनेषु दृशोरिति द्विवचन जात्यभिप्रायम् । ईदृग्जातीनां प्रायेण द्वित्वविशिष्टत्वात् । यथाह वामनः 'स्तनादीनां द्वित्वविशिष्टा जातिः प्रायेण' इति ॥ ७५ ॥

**तस्मै विज्ञापयामासुर्विदितार्थाय नाकिनः ।**
**निहताशेषदैत्याय निदानं स्वागतेः पुनः ॥ ७६ ॥**

**तस्मा इति** । नाकिनो देवाः । निहताशेषदैत्याय निहतकालनेमिप्रमुखाखिलदैत्याय । विदितार्थाय निहता दैत्याः भूमावुत्पन्ना बाधन्ते पुनस्तदर्थमागता इति स्वत एव विदितस्वागमनप्रयोजनाय । तस्मै पुरुषोत्तमाय । स्वागतेः स्वागमनस्य । निदानं मूलम् । विज्ञापयामासुः । 'कर्मणा यमभिप्रैति' इत्यत्र क्रियाग्रहणमपि कर्तव्यमिति चतुर्थी ॥ ७६ ॥

**त इमे क्षत्रिया भूत्वा क्षोभयन्ति क्षमामिमाम् ।**
**तव तेजसि यन्नाथ दनुजैश्शलभायितम् ॥ ७७ ॥**

**त इति** । हे नाथ, तव तेजसि तेजः प्रताप एव तेजः अग्निः 'तेजो बले प्रतापे च रोचिष्यर्चिषि रेतसि । नवनीतेऽनले धर्मे' इति यादवः । तस्मिन्, यैः दनुजैः । शलभायितं शलभवदाचरितम् । त इमे क्षत्रिया भूत्वा, इमां क्षमां पृथिवीम् । क्षोभयन्ति । शलभायितमित्यत्र **उपमा** तेजसीति श्लेषमूलाभेदाध्यवसायरूपा **अतिशयोक्तिश्चेति संकरः** ॥ ७७ ॥

**चतुर्णां पुरुषार्थानां प्रसवो यत्समाश्रयात् ।**
**हव्यकव्यप्रसूरेषा दीर्यते दैत्यभारतः ॥ ७८ ॥**

**चतुर्णामिति** । चतुर्णां धर्मादीनां पुरुषार्थानाम् । यत्समाश्रयात् यस्यास्समाश्रयणात् । प्रसवः उत्पत्तिः । भूमिं आश्रित्य हि यज्ञादयो धर्मास्संपादनीयाः मनुष्याधिकारत्वात्, तन्मूलौ चेह परत्र चार्थकामौ, मोक्षोऽपि विद्याद्वारा तत्सापेक्षः, 'विविदिषन्ति यज्ञेन दानेन' इत्यादिश्रुतेः । अतः पुरुषार्थचतुष्टयस्यापि क्षित्याश्रयणेनैवोत्पत्तिरिति भाव. । एषा हव्यकव्यप्रसूः हव्यं देवार्थमन्नं कव्यं पित्रर्थं 'हव्यकव्ये दैवपित्र्ये अन्ने' इत्यमरः । ते प्रसूत इति हव्यकव्यप्रसूः सर्वौषधीनां दोग्ध्री भूमिः । 'सत्सूद्विषद्रुह' इत्यादिना क्विप् । दैत्यभारतः दैत्यानां भारेण । 'आद्यादिभ्य उपसङ्ख्यानम्' इति तसिप्रत्ययः । दीर्यते । दॄ विदारण इति धातोः कर्मकर्तरि यक्प्रत्ययः । दिवादिगणापरिसमाप्तेः श्यन्प्रत्ययो वा । अतः सर्वथा सर्वपुरुषार्थोपयोगिनीयमवश्यं रक्षणीयेति भावः ॥ ७८ ॥

**जाता निखिलवेदानामुत्तमाङ्गोपधानतः ।**
**त्वत्पादकमलादेषा त्वदेकाधीनधारणा ॥ ७९ ॥**

अथ त्वत्पादोत्पन्नत्वात् त्वयैव रक्षणीयेत्याहुः— **जातेति** । निखिलवेदानाम् । उत्तमाङ्गानां शिरसामुपनिषदां उपधानतः प्रतिपाद्यत्वेन समाश्रयणीयतया उपधानभूतात् । 'अपादाने चाहीयरुहोः' इति तसिः । त्वत्पादकमलात् त्वत्पादपद्मात् । जाता एषा देवी । त्वदेकाधीनधारणा त्वदेकायत्तभरणकृत्या । अत्र भगवत्पादकमलस्य वेदानामुत्तमाङ्गोपधानत्वरूपणात् वेदानां तदाश्रयणनिर्वृतपुरुषत्वरूपणं गम्यत इति एकदेशविवर्ति**रूपकालङ्कारः** । त्वत्पादकमलादित्यत्र**ोपमा चेति** तयोः **संसृष्टिः** ॥ ७९ ॥

**यदि न त्वरते नाथ भारव्यपनये भवान् ।**
**प्लावयिष्यन्त्युदन्वन्तः पृथिवीं पृथुवीचयः ॥ ८० ॥**

**यदीति** । हे नाथ, भवान् । भारव्यपनये भूभारावतारणे । यदि न त्वरते यदि विलम्बते । तदा, पृथुवीचयो महातरङ्गाः । उदन्वन्तः । पृथिवीं प्लावयिष्यन्ति सेचयिष्यन्ति । भारेण भुवि मज्ये नमितायां निम्नप्रवणजला जलनिधयस्तां मज्जयिष्यन्तीत्यर्थः ॥ ८० ॥

**करुणाधीनचित्तेन कर्णधारवती त्वया ।**
**मावसीदतु पृथ्वीयं महती नौरिवाम्भसि ॥ ८१ ॥**

**करुणेति** । करुणाधीनचित्तेन दयापरतन्त्रहृदयेन । त्वया । कर्णधारवती नाविकवती । 'कर्णधारस्तु नाविकः' इत्यमरः । इय पृथिवी । महती नौरिव । अम्भसि सागरोदके । मावसीदतु अवसन्ना माभूत् । "माङि लुङ्" इत्यत्र गृहीतान्माङोऽन्यः केवलोऽयं माशब्दः प्रतिषेधार्थ इति लोडुपपत्तिः ।

त्वयि कर्णधारकल्पे जाग्रति नाव इव भूमेरम्भस्यवसादो न युक्त इत्यर्थः। अत्र भगवति कर्णधारत्वारोपस्य पृथिव्यवसादपरिहरणरूपप्रस्तुतकार्योपयोगात् **परिणामः तत्संकीर्णोपमाचालंकारः** ॥ ८१ ॥

**रशनारत्नरूपेण पयोधिरशना त्वया ।**
**प्रशान्तदनुजक्लेशा परिष्करणमर्हति ॥ ८२ ॥**

**रशनेति**। पयोधिरशना समुद्रमेखला पृथिवी। **रशनारत्नरूपेण** समुद्रशायित्वेन पृथ्वीमेखलाया रत्नतुल्येन। त्वया। प्रशान्तदनुजक्लेशा सती। परिष्करण प्रसाधनम्। अर्हति। क्लेशमनुभवन्त्याः किं परिष्करणेनेति दैत्योपसहारेण क्लेशमपनीय परिष्करणीयेति भावः। 'निभसंकाशनीकाशप्रतिकाशोपमादयः' इत्यमरकोशव्याख्यातृभिरादिशब्देन भूतरूपकल्पादीनां ग्रहणमित्युक्तेरत्र रूपशब्दस्तुल्यवाची। अत एव **उपमोपक्रमोत्प्रेक्षालंकारः**। तस्य स्वरूपवाचित्वे तु रशनारत्नत्वारोप परिष्करणकार्योपयोगीति **परिणामालंकारः** ॥ ८२ ॥

**कंसप्रभृतिभिस्सेयं शल्यैरिव समुद्धृतैः ।**
**चिरं भवतु ते पृथ्वी शेषमूर्तेः शिखण्डकः ॥ ८३ ॥**

**कंसेति**। सा तथा क्लेशमनुभवन्ती। इयं सन्निहिता पृथ्वी। शल्यैः अन्तःप्रविष्टैः शरैरिव। समुद्धृतैः। कंसप्रभृतिभिः। चिरम्। ते तव। शेषात्मिकाया मूर्तेः शिखण्डकः काकपक्षः। भवतु। दैत्योपसहारेण लाघवं प्राप्ता भूमिः। शेषस्य शिखण्डकवत् सुवहा भवत्वित्यर्थः। अनेन दैत्यानुपसहारे शेषस्यापि महाभार इति सूचितम्। शल्यैरिवेत्युपमा शिखण्डक इति **रूपकं** चेति तयोः **संसृष्टिः**। समुद्धृतैः

कसप्रभृतिभिरिति विशिष्टहेतुत्वविधिः 'दध्ना जुहोति' इति न्यायेन विशेषणविधिपर्यवसन्न इति कंसादिसमुद्धरणस्यैव सुबहुतानिमित्तत्वमत्र विवक्षितम् ॥ ८३ ॥

**प्रबोधसुभगैः स्मेरैः प्रसन्नैः शीतलैश्च नः ।**
**कटाक्षैः प्लावय क्षिप्रं कृपैकोदन्वदूर्मिभिः ॥ ८४ ॥**

**प्रबोधेति** । प्रबोधेन योगनिद्रापगमेन सुभगैः चक्षुष्यैः । 'चक्षुष्य. सुभग. कान्तः' इति यादवः । प्रसन्नैः भ्रूविलासमन्दस्मितानुगतैः । 'तत् प्रसन्न भवेत् सभ्रूविलास विस्मित च यत् ।' इति लक्षणम् । **स्मेरैः** हर्ष-विकासिभि. । भक्तजनतापहरत्वेनोपचारात् शीतलैश्च । कृपैव एको मुख्य उदन्वान् तस्योर्मिभिः । कटाक्षैः अपाङ्गदर्शनैः । नः अस्मान् । क्षिप्रम् । प्लावय सेचय । अत्र कृपायास्समुद्रत्वरूपणस्य कटाक्षाणामूर्मित्वरूपणस्य च परम्परा सञ्जातेति **परम्परितरूपकालङ्कारः** ॥ ८४ ॥

**त्वयि न्यस्तभराणां नस्त्वमेतां क्षन्तुमर्हसि ।**
**विदिताशेषवेद्यस्य विज्ञापनविडम्बनाम् ॥ ८५ ॥**

**त्वयीति** । त्वयि न्यस्तभराणा भरन्यास शरणागतिमनुष्ठितवताम् । नः अस्माक । विदिताशेषवेद्यस्य । तवेति शेषः । एतां विज्ञापनमेव विड-म्बनां अनुचितकृत्यम् । त्वम् । क्षन्तु अर्हसि ॥ ८५ ॥

**इत्थं वदति देवानां समाजे वेधसा सह ।**
**ववन्दे पृथिवी देवं विनतत्राणदीक्षितम् ॥ ८६ ॥**

**इत्थमिति** । देवानाम् । समाजे समूहे । वेधसा ब्रह्मणा सह । इत्थ वदति सति । पृथिवी । विनतत्राणे दीक्षित कृतव्रतम् । देवम् । ववन्दे ॥

**तनुमध्या विशालाक्षी तन्वी पीनपयोधरा ।**
**मायेव महती तस्य वनितारत्नरूपिणी ॥ ८७ ॥**

**तनुमध्येति** । तन्वी तन्वङ्गी । तनुमध्या मध्यभागे ततोऽपि तनीयसी । विशालाक्षी दीर्घलोचना । पीनपयोधरा पीवरस्तनी । वनितारत्न वनितोत्तमा, 'रत्न स्वजातिश्रेष्ठेऽपि' इत्यमरः । तद्रूपमस्या अस्तीति तथोक्ता । तस्य भगवतो महती मायेव स्थिता । अतिमोहनरूपेण 'मूर्ता विष्णोर्महामाया' इत्युत्प्रेक्षणीया । ववन्द इति पूर्वेण सबन्धः ॥ ८७ ॥

**आबद्धमण्डलैर्भृङ्गैरलकामोदमोहितैः ।**
**अयत्नलब्धां बिभ्राणा मायूरच्छत्रसंपदम् ॥ ८८ ॥**

**आबद्धेति** । अलकाः कुटिलकेशाः । 'अलकाश्चूर्णकुन्तलाः ।' इत्यमरः । तेषामामोदेन सौरभेण मोहितैः परवशीकृतैः । अत एव, आबद्धमण्डलैः उपरि मण्डलमाबध्य भ्रमद्भिः । भृङ्गैः । अयत्नेन लब्धाम्, मायूरच्छत्रसपद मयूरपत्रकृतातपत्रशोभाम् । बिभ्राणा । 'शोभार्थेऽपि प्रयुज्यन्ते लक्ष्मीश्रीकान्तिसपदः ।' इति हलायुधः । अत्र राजमहिषीणामुचित मयूरच्छत्रधारण भृङ्गैः सपादितमिति भिन्नविभक्तिनिर्दिष्टानां भृङ्गाणां मायूरच्छत्ररूपेण परिणामाद्व्यधिकरण**परिणामालङ्कारः** ॥ ८८ ॥

**प्रियसंदर्शनानन्दजनितैरश्रुबिन्दुभिः ।**
**न्यस्तमौक्तिकनैपथ्यैः परिष्कृतपयोधरा ॥ ८९ ॥**

**प्रियेति** । प्रियस्य सन्दर्शनात् यः आनन्दः तेन जनितैः । न्यस्तमौक्तिकनैपथ्यैः निवेशितमौक्तिकाभरणैः । अश्रुबिन्दुभिः । परिष्कृतपयोधरा । अत्र

आनन्दबाष्पबिन्दूनां पङ्क्तिरेव पयोधरगतमौक्तिकनैपथ्यत्वेनाध्यवसितेति भेदे **अभेदरूपातिशयोक्तिरलङ्कारः** ॥ ८९ ॥

**प्रस्फुरन्तं प्रियस्येव परिरम्भाभिलाषिणम् ।**
**दक्षिणादितरं बाहुं दक्षिणा बह्वमन्यत ॥ ९० ॥**

**प्रस्फुरन्तमिति** । दक्षिणा प्रवीणा शुभाशुभनिमित्तज्ञा । प्रकर्षेण स्फुरन्तम् । अत एव, प्रियस्य परिरम्भाभिलाषिणं प्रियपरिरम्भं अभीक्ष्णं अभिलषन्तमिव स्थितम् । अत्यन्ताभिलाषेण त्वरमाणो हि भ्रमति नैकत्रावतिष्ठते । दक्षिणादितरं वामम् । बाहुम् । बहु यथा तथा अमन्यत । 'वामभागश्च नारीणां श्रेष्ठः पुंसान्तु दक्षिणः । दाने देवादिपूजायां स्पन्देऽलङ्करणेऽपि च ।' इति स्मृतेः शुभसूचकतया प्राशस्त्यात् बहुमेने । बाहौ परिरम्भाभिलाषित्वसंभावनादुत्**प्रेक्षालङ्कारः** ॥ ९० ॥

**विपदं च जगादैषा विपञ्चीमधुरस्वना ।**
**विलक्षस्मितसंभिन्नमौक्तिकाधरविद्रुमा ॥ ९१ ॥**

**विपदमिति** । विपञ्ची वीणेव मधुरस्वना हृद्यस्वना । एषा पृथ्वी । विलक्षस्मितं विस्मयान्वितस्मितम्, 'विलक्षो विस्मयान्वितः ।' इत्यमरः । लज्जान्वितस्मितं वा । 'आत्मनः स्खलिते सम्यक् ज्ञातेऽन्यैर्यस्य जायते । अपत्रपातिमहती स विलक्ष इति स्मृतः ।' इति लज्जाविशेषविशिष्टस्य तत्सामान्यवैशिष्ट्यलक्षणासंभवात्; संभिन्नं मौक्तिकं यस्मिन् तथोक्तः विलक्षस्मितेन संभिन्नमौक्तिकः मौक्तिकसंभेदवान् अधर एव विद्रुमो यस्यास्सा तथाभूता सती । विपदं जगाद च । पूर्वश्लोकक्रियासमुच्चयार्थश्चकारः । अत्र विपञ्चीमधुरस्वनेत्यु**पमा** । स्मितस्य मौक्तिकत्वेनाधरस्य विद्रुमत्वेन च रूपणात् **रूपकञ्चेति** तयोः **संसृष्टिः** ॥ ९१ ॥

**अथ तान्भव्यया वाचा भगवान्प्रत्यभाषत ।**
**प्रतिश्रुत्प्राप्तनिर्ह्रादपाञ्चजन्याभिनन्द्यया ॥ ९२ ॥**

**अथेति** । अथ धरणीवचनानन्तरम् । भगवान् । भव्यया कल्याण्या । प्रतिश्रुत् प्रतिध्वनिः तया प्राप्तनिर्ह्रादस्य लब्धघोषस्य पाञ्चजन्यस्य भगवच्छङ्खस्य अभिनन्द्यया, प्रतिध्वनिमता पाञ्चजन्येनाभिनन्द्यमानयेव स्थितयेति **गम्योत्प्रेक्षा** । एवंभूतया, वाचा । तान् देवान् । प्रत्यभाषत । प्रतिध्वनिकारितया भगवद्ध्वनेरतिगम्भीरत्वं व्यज्यते ॥ ९२ ॥

**मा भैषुरसुरानीकाद्भवन्तो मदुपाश्रयाः ।**
**मदाज्ञामनवज्ञातुः परिभूत्या न भूयते ॥ ९३ ॥**

**मा भैषुरिति** । अहमुपाश्रयः शरणं येषां ते मदुपाश्रयाः । भवन्तः । असुरानीकात् दैत्यसैन्यात् । मा भैषुः मा त्रासिषु । भवच्छब्दयोगेन युष्मदुपपदस्य स्थानिनोऽप्यभावात् 'शेषे प्रथमः' । मदाज्ञां अनवज्ञातुः मदाज्ञानतिलङ्घनशीलस्य । ताच्छील्ये तृन्प्रत्ययोऽयम् । तद्योगे 'न लोकाव्यय' इत्यादिना षष्ठीनिषेधात् मदाज्ञामिति द्वितीया । परिभूत्या परिभवेन । न भूयते भावे लट् । मदाज्ञामनुवर्त्तमानानां न कुतोऽपि परिभवो भवतीत्यर्थः । मा भैषुरिति ञिभीभय इति धातोर्लुङ् । माङ्योगादडागमाभावः । मा भैषुरित्यर्थे उत्तरवाक्यार्थस्य हेतुत्वेनान्वयाद्वाक्यार्थहेतुकं **काव्यलिङ्गमलङ्कारः** ॥ ९३ ॥

**अवतार्य भुवो भारमवतारो ममामराः ।**
**अनादिनिधनं धर्ममक्षतं स्थापयिष्यति ॥ ९४ ॥**

**अवतार्येति** । हे अमराः । मम अवतारः । भुवो भारं दैत्यभारम् ।

अवतार्य । अनादिनिधन अनन्तकालप्रवाहेण एकरूपेण प्रवृत्तम् । धर्मम् । अक्षतं स्थापयिष्यति ॥ ९४ ॥

**यावदिष्टभुजो यावदधिकारमवस्थिताः ।**
**परिपालयत स्वानि पदानि विगतापदः ॥ ९५ ॥**

**यावदिति** । विगतापदः मदवतारेण दैत्यानामुपसंहारे सति अपहतापदः । यावदिष्टभुजः यावदिष्टं भुञ्जानाः, यावन्तीष्टानि यागादीनि तावन्ति भुञ्जाना इत्यर्थः । यावदधिकारं अवस्थिताश्च सन्तः । स्वानि पदानि स्थानानि । परिपालयत । यावदिष्टयावदधिकारशब्दयोः 'यावदवधारणे' इत्यव्ययीभावः ॥ ९५ ॥

**दमनाद्दनुजेन्द्राणां द्रक्ष्यथ त्रिदशाधिपाः ।**
**भूयोऽपि लघुतां प्राप्तां भुवमुल्लाघितामिव ॥ ९६ ॥**

**दमनादिति** । हे त्रिदशाधिपाः सुरश्रेष्ठाः । दनुजेन्द्राणां असुरप्रधानानाम् । दमनात् । भूयोऽपि यथापूर्वम् । लघुतां प्राप्ताम् । भुवम् । उल्लाघितां व्याधिमुक्तीकृतामिव । द्रक्ष्यथ विलोकयिष्यथ । 'उल्लाघो निर्गतो गदात् ।' इत्यमरः । उल्लाघशब्दात् तत्करोतीतिण्यन्तात् कर्मणि निष्ठा ॥ ९६ ॥

**दैतेयमृगसङ्घाते मृगयारसभागिभिः ।**
**भवद्भिरपि मेदिन्यां भवितव्यं नराधिपैः ॥ ९७ ॥**

**दैतेयेति** । मेदिन्याम् । भवद्भिरपि । दैतेयाः असुरा एव मृगाः तेषां सङ्घाते । मृगया यात्रा तस्यां रसभागिभिः कौतुकभाग्भिः । नराधिपैः । भवितव्यं भवन्तोऽपि केषाञ्चिद्दुष्टानां वधार्थं क्षत्रियकुलेष्ववतरन्त्वित्यर्थः । 'सम्पृचानुरुध' इत्यादिसूत्रेण भजिधातोर्घिनुण्प्रत्यये 'चजोः कु घिण्ण्यतोः' इति कुत्वे च भागिशब्दः ॥ ९७ ॥

इतिताननघादेशस्समादिश्य जनार्दनः ।
अवधीरितदुग्धाब्धिर्मथुरायां मनो दधे ॥ ९८ ॥

**इतीति** । अनघादेशः अप्रतिहतनियोगः । जनार्दनः । इति उक्तप्रकारेण । तान् विबुधान् । समादिश्य । अवधीरितदुग्धाब्धिः अवमतक्षीराम्बुधिः सन् । मथुरायां मनो दधे, दुग्धाब्धिं विहाय मथुरायामवतरितव्यमिति ऐच्छदित्यर्थः । 'एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः । नागपर्यङ्कमुत्सृज्य ह्यागतो मथुरां पुरीम् ।' इति भागवतवचनार्थोऽत्रानुसहितः ॥ ९८ ॥

आश्वास्य वागमृतवृष्टिभिरादितेयान्
दैतेयभारनमितां पृथिवीं च देवीम् ।
प्रादुर्बुभूषुरनघो वसुदेवपत्न्यां
पद्मापतिः प्रणिदधे समयं दयायाः ॥ ९९ ॥

अथ 'सर्वत्र भिन्नसर्गान्तैः' इति लक्षणानुरोधात्सर्गावसाने वृत्तान्तरमाह— **आश्वास्येति** । अनघो निरवद्यः तत्तत्कर्मानुरोधितया वैषम्यनैर्घृण्यदोषरहितः । पद्मापतिः श्रीपतिः । वागेवामृत तस्य वृष्टिभिः । अदितेरपत्यानि आदितेया देवाः तान् । अदितिशब्दात् 'कृदिकारादक्तिनः' इति ङीष्प्रत्यये, 'स्त्रीभ्यो ढक्' इति ढक्प्रत्यये च रूपम् । एव दैतेयशब्दोऽपि । दैतेयानां भारेण नमिताम् । पृथिवी देवी च । आश्वास्य । वसुदेवस्य पत्न्यां देवक्याम् । प्रादुर्बुभूषुः प्रादुर्भवितुमिच्छुस्सन् । दयायाः । समय अवसरम् । प्रणिदधे दध्यौ । असुरपीडितानां प्राणिनां देवकीवसुदेवयोश्च दयनीयतया तत्तत्कर्मानुसारेण समयं प्रतीक्षितवानित्यर्थः । **वसन्ततिलकाख्यमिदं** वृत्तम् ॥ ९९ ॥

साधूनां स्वपदसरोजषट्पदानां
धर्मस्य स्थितिमनघां विधातुकामः ।
यद्गर्भे जगदखिलं स एव गर्भो
देवक्याः समजनि देवदेववन्द्यः ॥ १०० ॥

**साधूनामिति** । अखिलम् । जगत् । यद्गर्भे यस्य कुक्षिस्थम् । 'कुक्षौ कुक्षिस्थिते जन्तौ गर्भः' इति नानार्थे वैजयन्ती । देवानामपि देवा. ब्रह्मादयः तेषामपि वन्द्यः । स एव वासुदेवः । स्वस्य पदमेव सरोज पद्मं तस्य षटपदानां भ्रमराणां सरोजे भ्रमरवत् स्वचरणे आसक्तानाम् । साधूनाम् । धर्मस्य स्थितिं मर्यादाम् । अनघां निर्दोषाम् । विधातुकामः विधित्सुस्सन् । देवक्या गर्भः । समजनि सजातः । जनिधातोर्लुङि 'दीप-जन' इत्यादिना कर्तरि चिण् । विधातुकाम इत्यत्र विधातु कामो यस्येति बहुव्रीहिः । विधातु कामः कामनावानिति वा । मयूरव्यसकादित्वात् समासः । 'तु काममनसोरपि' इति मलोपः । देवकस्यापत्य दैवकी इति वृद्धिपाठस्साधुरित्यात्रेयः । अवृद्ध एव प्रसिद्धः । तथा यमकरत्नाकरेऽपि प्रयोगो दृश्यते । 'अखिलस्य योऽस्य जगतो यो निर्माता च देवकीयस्य । शर्मण इहावतारैर्योनिर्माता च देवकी यस्य ।' इति । संभवति चाण्प्रत्य-यान्तत्वेऽप्यवृद्धत्व ज्योतिषवत्, सज्ञापूर्वकविधित्वेन वृद्धिशास्त्रस्यानित्य-त्वात् । स्वपदसरोजेत्यत्र **परंपरितरूपकालङ्कारः** । **प्रहर्षणी-वृत्तमेतत्** ॥ १०० ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु यादवाभ्युदये महाकाव्ये
प्रथमः सर्गः ॥

**इतीति** । इतिशब्दः समाप्तिवाची प्रथमः सर्ग इत्येतदन्वयी । कवयः काव्यकृतः, तर्केण दीव्यन्तीति तार्किकाः वादिनः 'तेन दिव्यति' इति ठक्प्रत्ययः, तेषां सिंहस्य परिपन्थिभूतानां तेषां सिंहवद्भयङ्करस्य तेषु श्रेष्ठस्येति वा 'सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ।' इत्यमरः । सर्वेषु तन्त्रेषु सिद्धान्तेषु न्यायवैशेषिकपूर्वोत्तरमीमांसासाङ्ख्ययोगशैववैष्णवादिषु स्वतन्त्रस्य स्वेच्छया कंचिदर्थं स्थापयितुं दूषयितुं वा शक्तस्य । वेदान्ताचार्यस्य वेदान्तरहस्यार्थोपदेष्टुः । श्रीमद्वेङ्कटनाथस्य । कृतिषु प्रबन्धेषु । 'यतश्च निर्द्धारणे' इति सप्तमी । तत्कृतप्रबन्धानां मद्ध्य इत्यर्थः । यादवाभ्युदये यादवस्य कृष्णस्य अभ्युदयं विषयीकृत्य कृते, 'अधिकृत्य कृते ग्रन्थे' इति प्राप्तस्याणप्रत्ययस्य 'लुबाख्यायिकाभ्यो बहुलम्' इति लुप् । 'सर्गैरनतिविस्तीर्णैः श्राव्यवृत्तैस्सुसन्धिभिः । सर्वत्र भिन्नसर्गान्तैरुपेतं लोकरञ्जनम् ।' इत्युक्तमहाकाव्यलक्षणयुक्ते प्रबन्धे । प्रथमः सर्गः । इति समाप्त इत्यर्थः ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीविश्वजिद्याजि-
श्रीरङ्गराजाध्वरिवरसूनुना अप्पय्यदीक्षितेन
विरचिते यादवाभ्युदयव्याख्याने

**प्रथमः सर्गः** ॥

**श्रीमते वेदान्तगुरवे नमः ।**



# द्वितीयः सर्गः ।



अथागमानामनघेन भूम्ना
धर्मस्य पूर्णेन धनागमेन ।
दिवौकसां दर्शयता विभूतिं
देवी बभौ दौहृदलक्षणेन ॥ १ ॥

**अथेति** । अथ भगवतो गर्भप्रवेशानन्तरम् । देवी राज्ञी । आगमानां वेदानाम् । अनघेन रम्येण । 'अनघो निर्मलापापरम्येषु च निरामये ।' इति रत्नमाला । भूम्ना बहुत्वेन, प्रचयेन वेदप्रचारविरोधिदैत्यादिसंहरणार्थभगवदाविर्भावानदानतया प्रचयहेतुत्वात् । बहुशब्दादिमनिचि 'बहोर्लोपो भू च बहोः' इति तदादेर्लोपे बहुशब्दस्य भ्वादेशे च सति भूमेति रूपम् । धर्मस्य । पूर्णेन । धनागमेन धनलाभेन । धर्मस्य समृद्धिहेतुतया परिपूर्णधनलाभसादृश्यात् । दिवौकसां देवानाम् । विभूतिं ऐश्वर्यम् । दर्शयता । तेषामैश्वर्यप्राप्तौ हेतुतया तत्प्रदर्शयितृसादृश्यात् । दौहृदलक्षणेन गर्भचिह्नेन । बभौ प्रचकाशे । अत्रैकस्यैव दौहृदलक्षणस्य भूमादिरूपेण रूपणान्मालारूपकालङ्कारः ॥ १ ॥

शृङ्गारवीराद्भुतचित्ररूपं
गर्भे त्रिलोकैकनिधिं वहन्त्याः ।
परावरक्रीडितकर्बुराणि
द्वेधाभवन् दौहृदलक्षणानि ॥ २ ॥

**शृङ्गारेति** । शृङ्गारवीराद्भुतैः रसविशेषैः चित्रं नानारूपम् । त्रिलोकै-

कनिधि त्रयाणां लोकानामेकासदभूत भगवन्तम् । गर्भे वहन्त्याः । परावर-क्रीडितेति द्वन्द्वान्तस्थः प्रत्येकमभिसंबध्यते । तथा च गर्भे त्रिलोकैकनिधिमिति तन्मयतावाप्त्या परत्वपिशुनानि क्रीडितानि परक्रीडितानि, शृङ्गारादिप्रचुरमिति तद्धर्मसक्रान्त्या लोकवदवरत्वपिशुनानि अवरक्रीडितानि द्विविधान्यपि 'लिलेख विश्वानि जगन्त्यभिज्ञा' इत्यादिभिः श्लोकैरग्रे वर्णयिष्यति । तैः कर्बुराणि चित्राणि । 'चित्रकिर्मीरकल्माषशबलैताश्च कर्बुरे ।' इत्यमरः । दौहृदलक्षणानि गर्भचिह्नानि । द्वेधा परावररूपतया द्विप्रकाराणि । अभवन् प्रादुर्भूतानीत्यर्थः ॥ २ ॥

**अशेषवेदैरधिगम्यभूम्ना**
**सिद्धेन सिद्धैश्च निषेवितेन ।**
**अमानुषी नूनमभूदयत्ना-**
**त्कृष्णेन केनापि रसायनेन ॥ ३ ॥**

**अशेषेति** । अशेषवेदैः अधिगम्यभूम्ना सकलवेदप्रतिपाद्यमहिम्ना । सिद्धेन नित्येन । रसायनपक्षे प्रसिद्धेन । 'सिद्धःस्याद्देवयोनिषु । नित्ये प्रसिद्धे निष्पन्ने' इति विश्वः । सिद्धैः देवयोनिविशेषैः । निषेवितेन पूजितेन । अन्यत्र कायसिद्धियुक्तैः प्राक तदर्थं स्वीकृतेन । कृष्णेनैव । केनापि अचिन्त्यप्रभावेन । रसायनेन औषधविशेषेण । 'रसायन विहङ्गेऽपि जराव्याधिहरौषधे ।' इति विश्वः । अयत्नात् यत्नमनपेक्ष्य । ल्यब्लोपे पञ्चमी । नूनम् । अमानुषी । अभूत् । कथमन्यथा मानुष्यास्तादृशस्तेजोविशेष इति भगवत्प्रवेशकृतेन 'रक्षाविधौ राक्षसदानवानाम् ।' इति श्लोके स्पष्टीकरिष्यमाणेन दिव्यतेजसा त**थोत्प्रेक्षा** । कृष्णे रसायनत्वारोपणा**द्रूपकम्** । रसायनमायुर्वेदमात्रप्रतिपाद्य जराव्याधिमात्रापनायकञ्च ।

इदन्तु सर्ववेदप्रतिपाद्य मनुष्यत्वस्याप्यपनेये समर्थमिति **व्यतिरेक-श्चेति सङ्करः** ॥ ३ ॥

**शतह्रदाबन्धुरया स्वकान्त्या**
**संचारिजाम्बूनदबिम्बकल्पा ।**
**त्रय्यन्तसिद्धेन रसायनेन**
**कालेन भेजे कलधौतलक्ष्मीम् ॥ ४ ॥**

पूर्वश्लोकेन परत्वपिशुन दौहृदलक्षणमुक्तम् । लोकरीत्येदानीमङ्गेषु धावल्यापत्तिं तावत् षड्भिः श्लोकैर्वर्णयति । **शतह्रदेति** । शतह्रदाबन्धुरया विद्युन्मनोहरया । 'सुरूप ह्रारि बन्धुरम्' इत्यमरशेषः । स्वकान्त्या निजशोभाविशेषेण । 'मन्मथाप्यायनकरी शोभा कान्तिर्निगद्यते ।' इति यादवः । सञ्चारिजाम्बूनदबिम्बकल्पा सञ्चारवत्कनकप्रतिमासदृशी देवकी । त्रय्यन्तसिद्धेन उपनिषत्प्रसिद्धेन । रसायनेन कृष्णेन । कृष्णे रसायनत्वाध्यवसायात् **अतिशयोक्तिः** । कालेन कालक्रमेण । कलधौतलक्ष्मीं रजतशोभाम् । भेजे लेभे । रसायनास्वादोऽपि वर्णान्तरं करोतीति भावः ॥ ४ ॥

**मयूरपिञ्छद्युतिभिर्मयूखै-**
**स्तत्कान्तिरन्तर्वसतस्त्रिधाम्नः ।**
**श्यामा बहिर्मूलसिता बभासे**
**मङ्गल्यरत्नाङ्कुरपालिकेव ॥ ५ ॥**

**मयूरेति** । अन्तः गर्भे वसतः । त्रिधाम्नः श्रीकृष्णस्य । मयूरपिञ्छद्युतिभिः बर्हिबर्हाभैः । मयूखैः । बहिः उपरिभागे । श्यामा । मूलसिता अधःप्रदेशे सिता । तत्कान्तिः तस्याः देवक्याः द्युतिः । मङ्गल्यरत्ना-

ङ्कुराणां पालिका आवलिरिव । बभासे । अङ्कुरा अप्युपरिभागे श्यामला मूले शुभ्राश्च भवन्ति । तथा च देवकीप्रभामतीत्योपरि गच्छद्भिः कृष्णप्रभाकन्दलैः श्यामलिताग्रा देवकीप्रभा, अत एव मङ्गल्या जगन्मङ्गलार्थानुष्ठिताङ्कुरार्पणकर्मकृतरत्नाङ्कुरपङ्क्तिरिव बभास इत्यर्थः । उत्प्रेक्षालङ्कारः । अत्र कृष्णप्रभानिर्गमनोक्त्या परत्वज्ञापक दौहृद-लक्षणमुक्तम् ॥ ५ ॥

**काले बभासे वसुदेवपत्न्याः**
**कर्पूरलिप्तेव कपोलशोभा ।**
**शशिप्रभा सप्तमगर्भकान्ति-**
**श्च्युतावशिष्टेव शनैरुदीर्णा ॥ ६ ॥**

**काल इति** । वसुदेवपत्न्याः । काले गर्भोपचयसमये । कर्पूरलिप्तेव स्थिता तथा शुभ्रा । कपोलशोभा कर्त्री । शशिनः प्रभेव प्रभा यस्याः सा शशिप्रभा, उपमानपूर्वपदो बहुव्रीहिरुत्तरपदलोपश्च । च्युतावशिष्टा गर्भसङ्क्रमणनिष्क्रान्तकान्तेरवशिष्टा । शनैः कालक्रमेण । उदीर्णा उद्गता । सप्तमगर्भस्य बलदेवस्य कान्तिरिव बभासे । कृष्णस्य देवकीगर्भे प्रवेशात् पूर्वं तत्र सप्तमस्मन्निविष्टो बलदेवो भगवन्मायया ततस्समाकृष्य रोहिणीगर्भे निवेशित इति पुराणकथा । **स्वरूपोत्प्रेक्षालङ्कारः** ॥ ६ ॥

**नवेन्दुनिष्यन्दनिभश्चकाशे**
**वर्णः प्रतीकेषु मधुद्रवाङ्ग्याः ।**
**अन्तः स्थितेन प्रथमेन पुंसा**
**प्रवर्तितं सत्वमिवावदातम् ॥ ७ ॥**

**नवेति** । मधुद्रवाङ्ग्याः नयनाप्यायन लावण्यं मधुत्वेनाध्यवसितम्,

द्रवन्त्येभ्य इति द्रवाणि मधुनो द्रवाणि मधुद्रवाणि तथाभूतानि अङ्गानि यस्यास्सा मधुद्रवाङ्गी तस्याः देवक्याः। प्रतीकेषु अवयवेषु। 'अङ्ग प्रतीकोऽवयवः' इत्यमरः । नवेन्दुनिष्यन्दनिभः नवेन इन्दोरमृतनिष्यन्देन सदृश इति अस्वपदविग्रहः, निभशब्दस्योत्तरपदत्वानियमात् । यथाह 'स्युरुत्तरपदे त्वमी । निभसङ्काशनीकाशप्रतीकाशोपमादयः ।' इति । वर्णः शुभ्रवर्णः। अन्तः गर्भे। स्थितेन। प्रथमेन पुंसा आदिपुरुषेण। प्रवर्तितम्। अवदात रजस्तमोऽनभिभूततया शुद्धम्। सत्वमिव। चकाशे। 'अजामेका लोहितशुक्लकृष्णां' इति श्रुतौ सत्वगुणस्य शुभ्रत्व प्रसिद्धम् । 'महान् प्रभुर्वै पुरुषस्सत्वस्यैष प्रवर्तकः ।' इति श्रुतौ च तत्प्रवर्तकत्व भगवतः प्रसिद्धमिति **तथोत्प्रेक्षा** । उपमायामेव लिङ्गभेददोषो नोत्प्रेक्षादिष्विति वामनालङ्कारे कथितम् । तदत्र नोपमानोपमेययोर्लिङ्गभेददोषप्रसङ्ग ॥ ७ ॥

**करम्बिता किञ्चिदिव प्रसूतै-**
**स्तेजोभिरन्तर्वसतस्त्रिधाम्नः ।**
**मरीचिभिः स्वैरभवत्प्रजानां**
**मङ्गल्यरत्नाङ्कुरपालिकेव ॥ ८ ॥**

**करम्बितेति** । अन्तर्वसतः त्रिधाम्नः । किञ्चिदिव प्रसूतैः ईषत् प्रसृतैः। तेजोभिः । करम्बिता सपृक्ता । देवकी। स्वैः। मरीचिभिः किरणैः। प्रजानां जनानाम्। मङ्गल्यरत्नाङ्कुरपालिकेव। अभवत्। 'मयूरपिञ्छद्युतिभिः' इति श्लोके तत्कान्तीनां रत्नाङ्कुरपङ्क्तित्वेनोत्प्रेक्षा, इह तस्यास्तदाधारपात्रत्वेन उत्प्रेक्षेति भेदः । किञ्चिदिवेति इवशब्दो वाक्यालंकारार्थः। 'इवैवादयो वाक्यपूरणार्थाः' इति शब्दप्रकाशिकावचनात् ॥ ८ ॥

तस्यास्सुधोल्लासजुषः कटाक्षाः
संक्षुब्धदुग्धाम्बुधिसौम्यभासः ।
जगत्त्रयीसौधविलेपनार्हां
वितेनिरे वर्णसुधामपूर्वाम् ॥ ९ ॥

**तस्या इति** । सङ्गतः क्षुब्धो मन्थाचलो यस्मिन् स सङ्क्षुब्धः । 'प्रादिभ्यो धातुजस्य' इत्यादिना बहुव्रीहिः । 'क्षुब्धस्वान्तध्वान्त' इत्यादिना निपातनान्मन्थवाची क्षुब्धशब्दः । सङ्क्षुब्धदुग्धोदधिरिव सौम्या मनोज्ञा भाः यस्याः मन्थाद्रिक्षोभेण परावर्तनसमये धावल्याधिक्य दृश्यत इति, कटाक्षास्सुधासाम्येन वर्ण्यन्त इति च मन्दरक्षुभितदुग्धोदधिसाम्योक्तिः । 'सौम्यो विप्रे सोमजेऽब्जे सुन्दरे सोमदैवते ।' इति यादवः । तस्याः देवक्याः । सुधोल्लासजुषः अमृतविभ्रमजुषः । कटाक्षाः । जगत्त्रय्या एव सौधस्य विलेपनमर्हतीतिविलेपनार्हा ताम् । अपूर्वां अप्रसिद्धां विलक्षणाम् । वर्णसुधां धवलवर्णमेव सुधां लेपनद्रव्यविशेषम् । वितेनिरे । 'लेपभेदेऽमृते सुधा' इति यादवः । 'अर्हः' इति सूत्रेण कर्मोपपदादर्हतेरच्प्रत्यये विलेपनार्हशब्दः । कविसमये वीक्षणानि प्रकृत्यापि धवलानि वर्ण्यन्ते । यथा । 'तामेव धवलेक्षणामारब्धरणरणकेन चेतसा चिन्तयतस्तस्य सा रात्रिर्जगाम ।' इति । विशेषतश्च गर्भसमय इति सुधोल्लासजुष इत्युक्तम् । अत्र संक्षुब्धेत्यादावुपमा । सुधोल्लासजुष इत्यत्रान्योल्लासस्यान्यत्र सम्बन्धायोगात् तत्सदृशोल्लासं गम्यत इति असंभवद्वस्तुसम्बन्धनिबन्धना **निदर्शना** । वर्णसुधामित्यत्र लेपनानुगुण्याद्रूपकं चेति **सङ्करः** ॥ ९ ॥

रक्षाविधौ राक्षसदानवानां
कारागृहे कंसनियोगभाजाम् ।
संपश्यमाना सकृदीक्षिता वा
संक्षोभयामास मनांसि सैषा ॥ १० ॥

**रक्षेति** । सा प्रसिद्धा। एषा देवकी। कारागृहे बन्धनालये । रक्षाविधौ देवकीवसुदेवयोर्निरुद्धयोस्सरक्षणकृत्ये । कंसनियोगभाजाम् । राक्षसानां दानवानां च । मनांसि (कर्माणि)। संपश्यमाना, सकृदीक्षिता वा, स्वयं तान् पश्यन्ती सकृदपि तैर्दृष्टा वा। संक्षोभयामास रक्षोऽसुरविरोधिवैष्णवतेजोभरितत्वात् भयसंरम्भक्षुभितान्यकरोदित्यर्थः। 'दृशेश्चेति वक्तव्यम्।' इति संपूर्वस्य दृशेरकर्मकस्यात्मनेपदित्वात् संपश्यमानेति शानच्। अकर्मकत्वमत्र कर्माविवक्षयोपपाद्यम् । यथाहुः । 'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया।' इति। ताच्छील्ये चानश्प्रत्ययो वा। तस्य परस्मैपदित्वेऽपि संभवात् ॥ १० ॥

भुक्ता पुरा येन वसुन्धरा सा
स विश्वभोक्ता मम गर्भभूतः ।
इति ध्रुवं सूचनमाचरन्ती
तत्तादृशं नाटितकं ततान ॥ ११ ॥

**भुक्तेति** । सा देवकी । पुरा पूर्वम् । येन । वसुंधरा भूमिः । भुक्ता आदिवराहादिरूपेण देवतारूपा वा रघुनाथादिरूपेण गोलकरूपा वा उपभुक्ता । सः । विश्वभोक्ता सर्वस्यापि हव्यकव्यादेः भोक्ता भगवान् । मम । गर्भभूतः गर्भं प्राप्तः । भूधातुरिह प्राप्त्यर्थः । इति । ध्रुव

नूनम् । सूचनं अभिव्यञ्जनम् । आचरन्ती सती । तत्तदिव दृश्यत इति तत्तादृग् तत्तद्भगवच्चरित्रसदृशम् । नाटितक अभिनयं वसुन्धरोपभोगरूपम् । ततान । अत्र गर्भलालसप्रयुक्तमृद्भक्षण भगवद्भुक्त्यार्थसूचकाभिनयत्वेन उत्प्रेक्ष्यते । यद्यपि विश्वभोक्तेत्यत्र 'तृजकाभ्यां कर्तरि' इति षष्ठीसमासनिषेधोऽस्ति, तथापि 'जनिकर्तुः प्रकृतिः' 'तत्प्रयोजको हेतुश्च' इति सूत्रनिर्देशदर्शनेन याजकादेराकृतिगणत्वादेतादृशस्समास इति केचिदाहुः । 'कृद्योगलक्षणषष्ठीसमासविषयो निषेध इति शेषषष्ठीसमासोपगमे न दोषः ।' इति हरदत्तः । षष्ठीसमासप्रतिषेधकाण्डारम्भः स्वरविषय इति मुनीतिकीर्तिनामा वृत्तिकारः । 'तृजकाभ्यां कर्तरि' इति सूत्रे तृचः सानुबन्धस्य ग्रहणं तृन्व्यावर्तनार्थमित्यत एव ज्ञापकात् तृन्योगे षष्ठीसमासो भवतीत्येतादृशस्तृन्नन्तसमास इति न्यासकारः । द्वितीयेति योगविभागात् तृन्नन्तेन द्वितीयासमास इत्यपि केचित् । सर्वथापि प्रयोगप्राचुर्यात् समासः साधुः । तत्तादृशमिति वीप्सिततच्छब्दोपपदाद्दृशेः कञ्प्रत्ययः । तमिवैनं पश्यन्ति जनाः सोऽयं स इव दृश्यमानः तमिवात्मानं पश्यतीति तादृगिति भाष्ये व्युत्पत्तिप्रदर्शनादुक्तार्थसाधुता । अनेकावतारकृतानि वसुधरोपभोगरूपाणि भगवच्चरितानि वीप्सिततत्पदेन गृह्यन्ते । भोजराजस्त्वत्र तत्पदवीप्सामनङ्गीकृत्य तुल्यशब्दसमानार्थतत्तुल्यशब्दवत् तादृशशब्दसमानार्थस्तत्तादृशशब्दोऽप्यस्त्यखण्ड इत्याह ॥ ११ ॥

**समाधिसुक्षेत्रकृषीवलानां**
**सन्तोषसस्योदयमेघकान्त्या ।**
**चकास तस्याः स्तनचूचुकाभा**
**गर्भत्विषा गाढमिवानुलिप्ता ॥ १२ ॥**

**समाधीति** । तस्याः । स्तनचूचुकयोः आभा । समाधिरेव सुक्षेत्रमुत्तम-

केदारः । तत्र कृषीवलानां कर्षकाणाम् । सन्तोष एव सस्य तस्योदये मेघ-कान्त्या योगिनामानन्दोद्गमकारणभूतया । गर्भस्य भगवतः त्विषा । गाढं भृशम् । अनुलिप्तेव । चकास शुशुभ इत्युत्प्रेक्षा । पूर्वार्धे परंपरितरूपकं चेति तयोः संसृष्टिः । धातूनामनेकार्थत्वात् कस गताविति धातुश्शोभाया-मपि वर्तते । चूचुकशब्दमात्रस्य स्तनाग्रवाचित्वेऽपि स्तनचूचुकशब्दप्रयोग करिकलभगजघटादिप्रयोग इव कविनिरन्तररूढ्या समाधेयः ॥ १२ ॥

**कस्तूरिकाकाम्यरुचिस्तदीया**
**रम्या बभौ चूचुकरत्नकान्तिः ।**
**तद्गर्भसंदर्शनलोलुपाना-**
**मन्तर्दृशामञ्जनकल्पनेव ॥ १३ ॥**

**कस्तूरिकेति** । कस्तूरिकया काम्या अभिलषणीया तदतिशायिनी रुचिः प्रभा यस्यास्सा । रम्या । तस्या इय तदीया । चूचुकरत्नयोः रत्न-तुल्ययोः चूचुकयोः कान्तिः शोभा । तस्या गर्भस्य भगवतः सन्दर्शने लोलुपानाम् । अन्तर्दृशां प्रत्यग्दृष्टीनां योगिनाम् । अञ्जनसामर्थ्यात् अन्तः-प्रवेशितदृशामित्यपि गम्यते । अञ्जनकल्पनेव दृशामन्तःप्रवेशनसमये दत्त-लग्न अञ्जनरञ्जनमिव । बभावित्युत्प्रेक्षा ॥ १३ ॥

**परावराणां प्रभवस्य पुंसः**
**प्रकाशकत्वं प्रतिपत्स्यमानाम् ।**
**अभावयन् भावितचेतसस्तां**
**विद्यानिधिं विश्वपितामहीं च ॥ १४ ॥**

**परावराणामिति** । परावराणां उत्कृष्टापकृष्टरूपाणां पूर्वापररूपाणां

वा सर्वेषां जगताम्। प्रभवस्य। पुंसः। प्रकाशकत्वम्। प्रतिपत्स्यमाना प्राप्स्यन्तीम्। तां देवकीम्। भावितचेतसः संस्कृतान्तःकरणाः ज्ञानिनः। विद्यानिधिं विश्वपितामहीं च। अभावयन्, त्वय्यन्तवत् परमात्मनः प्रकाशिकेति परविद्यानिधानरूपां विश्वजनकस्य प्रकाशिकां लोकद्रष्टा मातेति ज्ञातां विश्वपितामही च मेनिर इत्यर्थः। यद्यपि प्रकाशकत्वमित्यत्र कृदन्तस्य गुणवचनत्वाभावात् न पुंवद्भावसम्भवः। संज्ञाजातिव्यतिरिक्ता गुणवचना इति पक्षेऽपि 'न कोपधायाः' इति पुंवद्भावनिषेधात्। तथापि स्त्रीत्वाविवक्षायां अकृतस्त्रीप्रत्ययादेव त्वप्रत्यय इति समाधेयम्॥ १४॥

लिलेख विश्वानि जगन्त्यभिज्ञा
लीलाहृते चित्रपटे यथार्हम्।
प्रायः प्रजानां पतयः प्रतीता
यन्मातृकाः स्वेषु विधिष्वभूवन्॥ १५॥

**लिलेखेति**। अभिज्ञा भगवन्मयत्वं प्राप्य सकललोकसंस्थानाद्यभिज्ञा देवकी। लीलया आहृते। चित्रपटे आलेख्ययोग्ये पट इति मध्यमपदलोपी समासः। आश्चर्ये पट इति वा। 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः। यथार्हं यथोचितं यत्र यल्लेखनीयं तत्र तदनतिक्रम्येत्यर्थः। पदार्थानतिवृत्तावव्ययीभावः। विश्वान्यपि जगन्ति अखिलानपि लोकान्। लिलेख। प्रजानां पतयः स्रष्टारः। प्रायो नूनम्। यन्मातृकाः यो देवकीलिखितचित्रपटो मातृका येषां तथाभूतास्सन्तः। स्वेषु विधिषु स्वकृत्येषु। प्रतीताः ख्याताः। अभूवन् आसन्। प्रजापतीनामपि जगत्स्रष्टावनया लिखितचित्रपटः प्रायो मातृकाभूदित्युत्प्रेक्षा। तथा च यथावत् सकललोकसंस्थानलेखनं व्यज्यते॥ १५॥

निराशिषां पद्धतिमाददाना
नैश्रेयसीं नीतिमुपप्नयन्ती ।
पुण्याशया पूर्वयुगप्ररोह-
मियेष देवी भुवने विधातुम् ॥ १६ ॥

**निराशिषामिति** । निराशिषां निरभिलाषाणां विरक्तानाम् । 'आशीरुरगदंष्ट्रायां शुभवाक्याभिलाषयोः' इति यादवः । पद्धतिं मार्गम् । आददाना । नैश्रेयसीं निश्रेयससम्बन्धिनीं मुक्त्युपयोगिनीम् । नीतिं अबहिर्मनस्कतादिरूपाम् । उपप्नयन्ती आश्रयं कुर्वती । पुण्याशया शुद्धान्तःकरणा । देवी देवकी । भुवने । पूर्वयुगप्ररोहं सर्वपूर्वस्य कृतयुगस्याङ्कुरम् । विधातुं इयेष सत्वगुणसमृद्धस्य धर्मसंस्थापनरतस्य च भगवतः तादात्म्यापत्त्या तादृशीमेव शैलीमाश्रित्य कृतयुग इव चतुष्पादं धर्मं जगति प्रतिष्ठापयितुमैच्छदित्यर्थः ॥ १६ ॥

अनाप्तपूर्वं किमपेक्षितं ते
किं भुक्तपूर्वेष्वधुनोपदद्याम् ।
वयस्ययाऽभावविदानुयुक्ता
न किञ्चिदित्येव जगाद नाथा ॥ १७ ॥

**अनाप्तेति** । पूर्वमनाप्तं अनाप्तपूर्वं सुप्सुपेति समासः । किं वस्तु । ते तव । अपेक्षितम् । अथवा । भुक्तपूर्वेष्वेव । अधुना इदानीम् । किं वस्तु । उपदद्यां उपहरेयम् । इत्यनेन प्रकारेण । भावं वेत्ति इति भावविन्, सा न भवति इति अभाववित्, तया अभावविदा भगवद्रूपायास्तस्या नित्यतृप्ततया न क्वाप्यन्यासां गर्भिणीनामिव स्पृहेति तदभिप्रायमजा-

नत्या । वयस्यया स्निग्धया । अनुयुक्ता पृष्टा । नाथा स्वामिनी देवकी । न किंचित् इत्येव जगाद किमपि नापेक्षितमित्येव गदितवती ॥ १७ ॥

**अनादरे देवि सखीजनानां**
**दया न दूयेत कथं तवेति ।**
**उपह्वरे सल्लपिता मनोज्ञै-**
**रालोकनैरुत्तरमाचचक्षे ॥ १८ ॥**

**अनादर इति** । हे देवि । सखीजनानां अनादरे । तव दया सखीजनविषया । कथम् । न दूयेत न परितप्येत तप्येतैवेत्यर्थः । अतो दयापरतन्त्रया त्वया पूर्ववत् सल्लापादिना सख्यः सम्माननीया इति भावः । इति उपह्वरे रहसि । सल्लपिता सखीभिस्सम्भाषिता सती । मनोज्ञैः स्निग्धैः आलोकनैः । उत्तरम् । आचचक्षे उक्तवती । अखिलजगत्प्रभोरावेशनात स्वयमपि प्रभुशक्तिमाश्रित्य तादृशीमेव शैलीमन्ववर्ततेत्यर्थः । अनेन गर्भप्रयुक्तं दौर्बल्यं दर्शितम् ॥ १८ ॥

**अशेत सा काममजातनिद्रा**
**मातुं प्रवृत्तेव पदानि चक्रे ।**
**अध्यास्त लोकानवधीरयन्ती**
**भद्रासनं भावितपारमेष्ठ्या ॥ १९ ॥**

**अशेतेति** । सा देवकी । अजातनिद्रापि । कामं अत्यर्थम् । अशेत । मातुं प्रवृत्तेव इयन्ति पदानीति सञ्चारभूमिं परिमातुं प्रवृत्तेव । पदानि चरणविन्यासान् । चक्रे । लोकान् परिसरवर्तिजनान् । अवधीरयन्ती अनादृत्य

वर्तमाना। भावितपारमेष्ठ्या अनुसंहितपरमेश्वरचरिता च सती। भद्रासनं सुखासनम्। अध्यास्त अध्यतिष्ठत्। 'अधिशीङ् स्थासां कर्म' इत्यासनस्य कर्मत्वम्। 'भद्रं कल्याणसौख्ययोः' इति यादवः। अत्र दुर्वहगर्भवहनात आलस्येन निद्राभावेऽपि शयनम्, गमनेषु मन्दोद्यमत्व ग्लान्या, परिजनेष्व-प्यरतिः, आर्तिसमयोचित भगवच्चरितानुचिन्तनम्, सञ्चारासहिष्णुतया सुखासनेऽवस्थान च दर्शितम्। अनेन भगवदावेशकृत तच्चरितानुकरण-मपि दर्शितम्। पूर्वार्धे शेषशयनत्रिविक्रमचरितानुकरणप्रतीतेः, उत्तरार्धे च भावितपारमेष्ठ्या प्राप्तपरमेश्वरभावा। अत एव लोकानवधीरयन्ती जयन्ती च। भद्रासन राजासनमध्यास्तेति परमैश्वर्यानुकरणप्रतीतेश्च। परमे पदे तिष्ठतीति परमेष्ठी। 'तत्पुरुषे कृति बहुलम्' इत्यलुक्। प्रे स्थ इत्यनुवर्तमाने परमे किदित्यौणादिक इनिः। अम्बाम्बेति सूत्रस्थेन स्थास्थिन् स्थृणामिति वार्तिकेन षत्वम्। तस्य कर्म प्रथमार्थे, द्वितीयार्थे भावश्च पारमेष्ठ्यम्। ब्राह्मणादित्वात् कर्मणि भावे च ष्यञ्प्रत्ययः। भूधातोः भुवोऽवकल्कन इति चिन्तनार्थे भू प्राप्ताविति प्राप्त्यर्थे च णिज-नुशासनात् अर्थद्वयेऽपि भावितशब्दस्य साधुता ॥ १९ ॥

**परिक्रमप्रेक्षितभाषिताद्यै-**
**रन्यादृशैराप्तविभावनीयैः ।**
**मदोपपन्ना मदलालसा वा**
**जितश्रमा वेति जनैश्शशङ्के ॥ २० ॥**

**परिक्रमेति**। अन्यादृशैः पूर्वविलक्षणप्रकारैः। आप्तविभावनीयैः अत्यन्तान्तरङ्गावगन्तव्यैः। परिक्रमप्रेक्षितभाषिताद्यैः सञ्चरणावलोकनस-भाषणादिभिः। मदोपपन्ना मदकरद्रव्यसेवाकृतेन मदेन युक्ता। मदला-

लसा मन्थरा वा। जितश्रमा श्रमजिता वेति। जनैः। शशङ्के। कर्मणि लिट्। अत्रापि ग्लानिः प्रभुशक्तिमन्थरता चेति द्वयमपि प्रतीयते ॥ २० ॥

**शेषे शयानां गरुडेन यान्तीं**
**पद्मे निषण्णामधिरत्नपीठम्।**
**हयाननैराश्रितवन्दिकृत्यां**
**स्वामाकृतिं स्वप्नदृशा ददर्श ॥ २१ ॥**

**शेष इति**। स्वां आकृतिं। शेषे अनन्ते। शयानाम्। गरुडेन यान्तीम्। अधिरत्नपीठ रत्नपीठोपरि। विभक्त्यर्थेऽव्ययीभावः। पद्मे निषण्णाम्। हयाननैः किंपुरुषैः। आश्रितवन्दिकृत्यां अवलम्बितस्तुतिपाठककृत्यां च। स्वप्नदृशा स्वप्नरूपया दृष्ट्या। ददर्श ॥ २१ ॥

**अन्तःस्थितं यस्य विभोरशेषं**
**जगन्निवासं दधती तमन्तः।**
**तदात्मनो विश्वमपश्यदन्त-**
**स्तर्कातिगं तादृशमद्भुतं नः ॥ २२ ॥**

**अन्तरिति**। अशेष विश्वम्। विभोः अपरिच्छिन्नस्य। यस्य अन्तः जठरे। स्थितम्। जगन्निवासम्। त अन्तर्दधती। देवकी। तत् कृष्णस्य जठरे स्थितम् विश्वम्। आत्मनः स्वस्याः। अन्तरपश्यत्। नन्वपरिच्छिन्नस्य कथमस्या उदरे अवस्थानम्। कथं च तदुदरे स्थितस्य स्वोदरे दर्शनं तत्राह—तर्कातिगमिति। तादृशं भगवत्सङ्कल्पकृतम्। अद्भुतं आश्चर्यम्। नः अस्माकम्। तर्कातिगं तर्कमतिक्रान्तम्।

गमेरन्येष्वपि दृश्यत इति डः । अतर्क्यमहिम्नो भगवतस्सङ्कल्पेन कृते कानुपपत्तिरिति भावः ॥ २२ ॥

सुरासुराधीश्वरमौलिघाता-
द्विशीर्णजाम्बूनदवेत्रशृङ्गम् ।
आलक्ष्यसंतोषमलक्ष्यमन्यै-
रनीकनेतारमवैक्षतारात् ॥ २३ ॥

**सुरेति** । सुरासुराधीश्वरमौलिघातात् भगवत्सेवार्थं द्वारि समागतानां देवासुरप्रधानानां किरीटेषु ताडनात् । 'मौलिः किरीटे धम्मिल्ले' इति विश्वः । विशीर्णजाम्बूनदवेत्रशृङ्गं जर्जरीभूतकनकवेत्राग्रम् । आलक्ष्यसन्तोषं अभिव्यक्तानन्दम् । अन्यैः । अलक्ष्यं अदृश्यम् । अनीकनेतारं सेनान्यं विष्वक्सेनम् । आरात् समीपे । अवैक्षत । जाम्बूनदस्य वेत्रमिति षष्ठीसमासः । प्रकृतिविकारभावस्य षष्ठ्यैव प्रतीतेः ॥ २३ ॥

त्रिलोकमाङ्गल्यनिधेस्त्रिवेद्याः
संजीवनीं वाचमुदीरयन्ती ।
नियोगयोग्याननघप्रसादा
नाकौकसां नामभिराजुहाव ॥ २४ ॥

**त्रिलोकेति** । त्रयाणां लोकानां माङ्गल्यनिधेः श्रेयोनिधानभूतायाः । त्रयाणां वेदानां समाहारस्य त्रिवेद्याः । सञ्जीवनीं सञ्जीवनकारिणीं वेदार्थरहस्यगोचरतया तत्प्राणप्रदाम् । वाचम् । उदीरयन्ती । अनघप्रसादा अवितथानुग्रहा । सा । नियोगयोग्यान् नियोज्यान् । नाकौकसां देवानाम् ।

नामभिः इन्द्रचन्द्रादिनामभिः । आजुहाव आहूतवती । भगवत्तादात्म्यभावनया स्वनियोज्येष्वपि तदीयनियोज्येष्विव इन्द्रादिबुद्धिरेव तस्या बभूवेति भावः । त्रिलोकेति तद्धितार्थोत्तरपदेत्यादिना समासः ॥ २४ ॥

यदृच्छया यादवधर्मपत्नी
यामाह धर्मेषु परावरेषु ।
अदृष्टपूर्वापरयापि वाचा
प्रतिश्रुता नूनमभावि तस्याः ॥ २५ ॥

यदृच्छयेति । यादवस्य धर्मपत्नी । यदृच्छया स्वेच्छया न तु शास्त्रपर्यालोचनया । 'स्वेच्छा यदृच्छा स्वच्छन्दः स्वैरिता चेति तास्समाः' इति केशवः । परावरेषु निश्श्रेयसाभ्युदयहेतुतया उत्कृष्टापकृष्टरूपेषु । धर्मेषु विषयेषु । यां आह यां वाच जगाद । तस्याः वाचः । अदृष्टपूर्वापरया अनालक्षितपूर्वापरकोट्या । वाचा वेदवाचापि । नूनम् । प्रतिश्रुता प्रतिध्वनिना । अभावि भूतम् । भावे लुङ् । तस्या वाक् धर्मरहस्यनिष्कर्षशक्त्या वेदानामप्युपजीव्यासीदित्यर्थः । आहेत्युवाचार्थे विभक्तिप्रतिरूपकमव्ययमिति न स्मशब्दापेक्षा ॥ २५ ॥

क्रियामुपादित्सत विश्वगुप्त्या
कृतापराधेऽपि कृपामकार्षीत् ।
मुनीन्द्रवृत्त्या मुखरीभवन्ती
मुक्तिक्षमां वक्तुमियेष विद्याम् ॥ २६ ॥

क्रियामिति । विश्वगुप्त्या लोकरक्षणेन । क्रियां उपादित्सत विश्वगुप्तिरूपामेव क्रियामुपादातुमैच्छदित्यर्थः । यथा 'धूलीभिरन्धतमस

सपदि व्यधायि ' इति व्यधिकरणपरिणामालङ्कारोदाहरणे अन्धतमसविधानकरणत्वेनोपात्तानां धूलीनामन्धतमसत्वे पर्यवसानम्, तथोपादित्साकरणत्वेनोपात्ताया विश्वगुप्तेः क्रियात्वे पर्यवसानमवसेयम् । किञ्च, कृतापराधेऽपि जने । कृपाम् । अकार्षीत् करोति स्म । मुनीन्द्राणां वृत्त्या अध्यात्मचिन्तनरूपया । मुखरीभवन्ती शब्दायमाना सती । अभूततद्भावे च्विप्रत्ययः । मुक्तिक्षमां मोक्षोचिताम् । विद्यां परविद्याम् । वक्तु इवेष ॥ २६ ॥

सतां चतुर्वर्गफलप्रसूतौ
नारायणे गर्भगते नताङ्गी ।
अभङ्गुरामुन्नतिमाश्रयन्ती
सर्वस्य साऽदित्सत सर्वमेका ॥ २७ ॥

**सतामिति** । नताङ्गी स्तनभारनमिताङ्गी । सतां साधूनाम् । चतुर्णां धर्मार्थकाममोक्षाणां वर्ग एव फलं तस्य प्रसूतिर्यस्मात्तस्मिन् महावदान्ये । नारायणे । गर्भं गते सति । अभङ्गुरां अभङ्गशीलां स्थिराम् । उन्नतिं चित्तोन्नतिं दानोत्साहरूपाम् । आश्रयन्ती । एका सा देवकी । सर्वस्य । सर्वं समादित्सत एकयैव मया सर्वेऽपि सर्वाभीष्टदानेन तोषणीया इत्यैच्छादित्यर्थः । यद्यपि समानाधिकरणानां बहुव्रीहिरिष्यते । तथापि ' अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः ' इति वामनसूत्रात् चतुर्वर्गफलप्रसूताविति व्यधिकरणबहुव्रीहिः । यद्वा । चतुर्वर्गफलस्य प्रसूतौ प्रसवितरीति षष्ठीसमासोऽस्तु । ' अकर्तरि च कारके ' इति चकारात् कर्तर्यपि घञादयः प्रत्ययाः इत्यपि कैश्चिदभ्युपगमात् । सर्वस्येति सम्बन्धसामान्यविवक्षया षष्ठी ॥ २७ ॥

कृशोदरी तारकयाभिनन्द्या
केनापि धाम्ना कृतवृद्धियोगा ।
अतीत्य कार्श्यं क्रमशः प्रपेदे
परामभिख्यां तनुरैन्दवीव ॥ २८ ॥

**कृशोदरीति** । गर्भसमये, केनापि अतर्क्यमहिम्ना । धाम्ना भगवत्तेजसा । कृतवृद्धियोगा । तारकया अक्ष्णः कनीनिकया गर्भकालं-स्निग्धया । अभिनन्द्या श्लाघ्या । द्रष्टॄणां तारकाभिरभिनन्द्येति वा । कृशमुदरं यस्यास्सा देवकी । क्रमशः दिवसक्रमेण । कार्श्यं कृशत्वम् । अतीत्य । परां अभिख्यां उत्कृष्टां शोभाम् । प्रपेदे प्राप । ऐन्दवी इन्दुसंबन्धिनी । तनुरिव । यथेन्दुकला शुक्लपक्षारम्भसमये सौरतेजसा कृतवृद्धियोगा ताराभिः परितः स्थितैर्नक्षत्रैरभिनन्द्या च कार्श्यमतीत्य क्रमेण परां शोभां प्रतिपद्यते तद्वदित्यर्थः ॥ २८ ॥

निगूढमन्तर्दधता निविष्टं
पद्मापरिष्कारमणिं प्रभूतम् ।
मध्येन काले प्रचितेन तस्या
मञ्जूषया रूप्यभुवा बभूवे ॥ २९ ॥

**निगूढमिति** । अन्तर्निगूढं यथा तथा । निविष्टं स्थितम् । प्रभूत अदभ्रम् । पद्मापरिष्कारमणिं लक्ष्म्याः प्रसाधनरत्नमिति भगवति तथात्वाध्यवसायरूपातिशयोक्तिः । दधता धारयता । काले गर्भोपचयसमये । प्रचितेन पुष्टेन । तस्या मध्येन । रूप्यभुवा रजतप्रभवया । मञ्जूषया पेटिकया । बभूवे । भावे लिट् । मणिर्हि मञ्जूषायामभिरक्ष्यत इति भावः ॥ २९ ॥

**शनैश्शनैस्तामुपचीयमाना-**
**मन्तस्स्थकृष्णामवलोकयन्तः ।**
**दर्शान्तदीप्तामिव चन्द्रलेखां**
**चक्रुश्चकोरायितमात्मनेत्रैः ॥ ३० ॥**

**शनैरिति** । शनैश्शनैः उपचीयमानाम् । अन्तस्स्थकृष्णां अन्तर्गतदामोदराम् । चन्द्रलेखापक्षेऽन्तर्गतकृष्णमृगाम् । अत एव दर्शान्ते शुक्लपक्षारम्भे दीप्तां । चन्द्रलेखामिव स्थिताम् । तां अवलोकयन्तः जनाः । आत्मनेत्रैः । चकोरायित चकोरवदाचरण अनन्यपरतया तल्लावण्यसुधापानम् । चक्रुः । चकोरशब्दात् 'उपमानादाचारे' इति क्यङि भावे निष्ठा । उपचीयमानामिति कर्मकर्तरि प्रयोगः ॥ ३० ॥

**मयि स्थिते विश्वगुरौ महीयान्**
**माभूद्भुवो भार इतीव मत्वा ।**
**सखीजनानामवलम्ब्य हस्तान्**
**संचारलीलां शनकैश्चकार ॥ ३१ ॥**

**मयीति** । विश्वस्य गुरौ पितरि विश्वस्माद्गुरुत्वयुक्ते च कृष्णे । मयि अधिकरणभूतायाम् । स्थिते सति । भुवो महीयान् भारो मा भूत्, गुरुभार वहन्त्या मम दृढपदन्यासे भुवो महान् भारः स्यात्; स मा भूदिति मत्वेव । सखीजनानां हस्तान् अवलम्ब्य । शनकैः अद्भुतम् । सञ्चारलीला चकार । शनकैरित्यत्र 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इत्यकच्प्रत्ययः । अत्र दौर्बल्यप्रयुक्ते सञ्चारमान्द्ये भूभारापत्त्यनुचिन्तनस्य हेतुत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षालङ्कारः ॥ ३१ ॥

मुकुन्दगर्भा मुकुरेषु देवी
नापश्यदात्मानमवाप्तभूषा ।
नाथत्विषा नन्दकदर्पणेना-
दिदृक्षतात्मानमदृश्यमन्यैः ॥ ३२ ॥

**मुकुन्देति** । मुकुन्दो गर्भः कुक्षिस्थो यस्यास्सा । देवी । अवाप्तभूषा धृतभूषणा सती । आत्मानम् । मुकुरेषु दर्पणेषु । नापश्यत् । किंतु, अन्यैः अदृश्यं आत्मानम् । नाथे गर्भगते भगवति त्वेषति दीप्यत इति नाथत्विषा । नन्दकेन तत्खड्गेनैव दर्पणेन । अदिदृक्षत द्रष्टुमैच्छत् । लौकिकदर्पणेषु सकलदृश्यस्वशरीरस्य दर्शनं मया क्रियमाणत्वादनादृत्य 'तदात्मनो विश्वमपश्यदन्तः' इति पूर्वोक्तरीत्या स्वान्तस्स्थितविश्वान्तर्गतत्वात् परैर्द्रष्टुमशक्य स्वशरीरं सन्निहिते भगवत्खड्ग एव दिव्यदर्पणे द्रष्टुमैच्छदित्यर्थः । मुकुरेष्विति प्रतिबिम्बाधिकरणत्वविवक्षया सप्तमी । दर्पणेनेति तद्दर्शनकरणत्वविवक्षया तृतीया । नाथत्विषेति नाथोपपदात् त्विष दीप्ताविति धातोः कर्तरि क्विप् । नन्दकस्य सन्निहितत्वम्, भगवद्दीप्तिसन्निधावप्यप्रतिहत दीप्यत इति दिव्यदर्पणत्वं च द्योतयितु तद्विशेषणम् । अदिदृक्षतेत्यत्र 'ज्ञाश्रुस्मृदृशां सनः' इत्यात्मनेपदम् ॥ ३२ ॥

स्रजः प्रभूता न शशाक वोढुं
दूरे कथा रत्नविभूषणानाम् ।
भविष्यति क्षोणिभरापनोदे
प्रत्यायनं प्राथमिकं तदासीत् ॥ ३३ ॥

**स्रज इति** । प्रभूता बह्वीः । स्रजो माल्यानि । **वोढुम्** । **न शशाक** ।

दौर्बल्यादिति भावः। रत्नविभूषणानां मणिप्रधानाभरणानाम्। कथा। दूरे। तेषां ततोऽपि भारादिति भावः। भविष्यति क्षोणिभरापनोदे भगवदवतारानन्तरभाविनि भूभारनिरासे। तत् तस्या माल्याभरणापनोदनमेव। प्राथमिकं प्रथमकालभवम्। प्रत्यायन ज्ञापकम्। आसीत्। यत्रावतरति श्रीकृष्णस्तत्र भारापनोदनावश्यकतायामेतत् प्रथमप्रवृत्तमुदाहरणमासीदित्यर्थः ॥ ३३ ॥

**दिवौकसो देवकवंशलक्ष्मीं**
**विलोक्य तां लोकनिधानगर्भाम्।**
**विभूतिमग्रेसरवेदवादा**
**व्याचख्युरस्या विविधप्रकाराम् ॥ ३४ ॥**

**दिवौकस इति**। दिवौकसो देवाः। देवकः कसपितुरुग्रसेनस्य भ्राता, तद्वंशलक्ष्मीं संपदमिव सपद आनन्दहेतुत्वात्। तां देवकीम्। लोकनिधानं जगन्निवासः कृष्णो गर्भो यस्यास्तथाभूताम्। विलोक्य। अग्रेसरवेदवादाः पुरस्कृतवेदोक्तयस्सन्तः। अस्याः विविधप्रकारां विभूतिं वहुप्रकारमैश्वर्यम्। व्याचख्युः व्याख्यान्ति स्म। वेदगीर्भिरस्तुवन्नित्यर्थः ॥ ३४ ॥

**पतिस्ससत्त्वामपि तत्प्रभावा-**
**ददुःखशीलां समये भवित्रीम्।**
**सुखैकतानामवलोक्य देवीं**
**स्वसंपदं सूचयतीति मेने ॥ ३५ ॥**

**पतिरिति**। तस्याः पतिः वसुदेवः। ससत्वां गर्भवतीमपि। तस्य

गर्भस्य प्रभावान्माहात्म्यात्। न दुःख शीलति प्राप्नोतीत्यदुःखशीलां गर्भभरणक्लेशरहिताम्। समये आसन्नप्रसवकालेऽपि। सुखैकतानां भवित्रीं सुखैकरूपां सती गर्भसञ्चलनक्लेश विनैव सुखमासीनाम्। देवीं अवलोक्य। स्वस्य संपद अभिवृद्धिम्। सूचयतीति। मेने। इदमशरीरिवाक्यानुरोधेना न्यादृशस्याष्टमगर्भस्य प्रभावादेवेति स्वाभिवृद्धिं च निश्चितवानित्यर्थः। दुःखशीलामिति दुःखोपपदाच्छीलतिधातोः 'शीलिकामिभिक्षाचरिभ्यो णः' इति णप्रत्ययः॥ ३५॥

पितृत्वमासाद्य सुरासुराणां
पितामहत्वं प्रतिपत्स्यमानः।
अनन्तगर्भामवलोक्य देवी-
मतुष्यदन्येषु गताभिलाषः॥ ३६॥

पितृत्वमिति। पुरा काश्यपरूपेण सुरासुराणां पितृत्व आसाद्य। पितामहत्वं अखिलपितुर्भगवतो जनकतया तेषां पितुः पितृत्वम्। प्रतिपत्स्यमानो वसुदेवः। अनन्तो विष्णुः गर्भो यस्यास्ताम्। देवीं अवलोक्य। अन्येषु गताभिलाषो विषयान्तरेष्वपेताभिलाषस्सन्। अतुष्यत्। 'अनन्तो नागराड्विष्णुः' इति यादवः॥ ३६॥

तापोपशान्तिं जगतां दिशन्ती
सन्ध्याऽपरा साधुजनप्रतीक्ष्या।
तामीदृशीं विश्वपितुः प्रसूतिं
संवेदयन्तीव समाजगाम॥ ३७॥

अथ गर्भवर्णनानन्तरं जयन्त्या निशीथे भगवदवतारं वक्ष्यन् तदादौ

सायंसन्ध्यादिक्रमेण निशीथपर्यन्तं वर्णयितुमुपक्रमते—**तापेति** । जगतां तापोपशान्ति सौरातपतापस्य प्रशमम् । दिशन्ती । साधुजनप्रतीक्ष्या काले सन्ध्याकर्म कर्तुं परिपालनीया । अपरा सन्ध्या जयन्त्यास्तिथेः पश्चिम-सन्ध्या । ता प्रकृताम् । इदृशीं इत्थंभूतामासन्नाम् । विश्वपितुः प्रसूतिं सवे-दयन्तीव । समाजगाम समागतवती । दुष्टनिग्रहार्थं भगवदाविर्भावं निवेद-यन्त्यपि जगतां मनस्तापशान्तेः सवित्री सज्जनस्य प्रतीक्ष्या पूज्या च भवतीति सन्ध्यायास्तादात्म्ये**नोत्प्रेक्षा** । सा च मनस्तापसौरतापयोः पूज्यप्रतिपाल्ययोश्चाभेदाध्यवसायरूपा**तिशयोक्त्यु**त्थापितेति **सङ्करः** ॥

**सुवर्णपीताम्बरवासिनी सा**
**स्वधामसंछादितसूर्यदीप्तिः ।**
**उपासनीया जगतां बभासे**
**मुरद्विषो मूर्तिरिव द्वितीया ॥ ३८ ॥**

**सुवर्णेति** । शोभनो वर्णस्सुवर्णः सन्ध्यालोहितरूपः तेन पीते ग्रस्ते अम्बरे आकाशे वस्तुं शीलमस्या इति तथोक्ता । मूर्तिपक्षे सुवर्णमिव पीतं सुवर्णेन पीतं कनकलिप्तं वा अम्बरमंशुकं वासितु शीलमस्या इति तथोक्ता । एकत्र वस निवास इति, अन्यत्र वस आच्छा दन इति धातोस्ताच्छील्ये णिनिः । स्वधाम्ना स्वतेजसा सञ्छादिता सूर्यस्य दीप्तिर्यया सा तथोक्ता । सन्ध्यातेजसा हि सूर्यदीप्ति रारज्यते, मूर्तिपक्षे तिरस्क्रियत इति यावत् । जगतां उपासनीया पूज्या । सा सन्ध्या । मुरद्विषो नारायणस्य द्वितीया मूर्तिरिव बभासे इत्यु**त्प्रेक्षा** । सा च सुवर्णपीताम्बरेत्यादिश्लेषमूलकाभेदाध्यवसायरूपा**तिशयोक्त्यु**त्थापितेति **सङ्करः** ॥ ६८ ॥

प्रसक्तपातश्चरमाम्बुराशौ
रक्तोरुबिम्बो रविरस्तशैलात् ।
दिनान्तनागेन दृढप्रणुन्नं
मनश्शिलाशृङ्गमिवाबभासे ॥ ३९ ॥

**प्रसक्तेति** । चरमाम्बुराशौ पश्चिमसमुद्रे । प्रसक्तपातः प्रारब्धपतनः । रक्तोरुबिम्बः अस्तमयप्रत्यासत्त्या अरुणविपुलमण्डलः । रविः । दिनान्त एव नागो गजस्तेन । अस्तशैलात् चरमाद्रेः । 'अस्तस्तु चरमक्ष्माभृत्' इत्यमरः । दृढप्रणुन्नं नितान्त यत्नेन निरस्तम् । मनश्शिलाशृङ्गं गैरिकशिखरमिव । आबभासे । अत्र सूर्ये मनश्शिलाशृङ्गतादात्म्यसम्भावनारूपा **स्वरूपोत्प्रेक्षा** । सा च दिनान्तनागेनेति **रूपको**त्थापितेति **सङ्करः** ॥ ३९ ॥

निमज्जता वारिनिधौ सवित्रा
को नाम जायेत करग्रहीता ।
तदेति संभावनयैव नूनं
दूरादुदक्षेपि कराग्रमुच्चैः ॥ ४० ॥

**निमज्जतेति** । वारिनिधौ । निमज्जता आरब्धासमाप्तनिमज्जनेन । सवित्रा कर्त्रा । को नाम करग्रहीता जायेत, अमज्जनाय हस्तग्रहीता स्यादिति सभावनयैव । तदा तस्मिन् काले । करस्य किरणस्यैव हस्तस्याग्रम् । दूरात् उदक्षेपि दूरं क्षिप्तं । 'दूरान्तिकार्थेभ्यो द्वितीया च' इति प्रातिपदिकार्थमात्रे पञ्चमी । को नामेति नामशब्दस्तदीयसंभावनाद्योतकः । 'नाम प्राकाश्यसभाव्यक्रोधोपगमकुत्सने' इत्यमरः । अत्र

कराग्रोत्क्षेपणे करग्रहीतृसंभावनारूपहेतूत्प्रेक्षा । सवितरि कूपादिनिपतत्पुरुषताप्रतीतेस्समासोक्तिः । करशब्दश्लेषमूलकातिशयोक्तिश्चेति सङ्करः ॥ ४० ॥

**स्फुरत्प्रभाकेसरमर्कबिम्बं**
**ममज्ज सिन्धौ मकरन्दताम्रम् ।**
**सन्ध्याकुमार्या गगनाम्बुराशेः**
**क्रीडाहृतं क्षिप्तमिवारविन्दम् ॥ ४१ ॥**

**स्फुरदिति** । स्फुरन्तः भ्राजमानाः प्रभाकेसराः केसरसदृशप्रभा यस्येत्युपमितसमासगर्भो बहुव्रीहिः । अरविन्दपक्षे स्फुरन्तः प्रभासदृशाः केसरा यस्येति मध्यमपदलोपिसमासगर्भः । मकरन्दः पुष्परस इव ताम्रं लोहितम् । अरविन्दपक्षे मकरन्देन ताम्रम् । अर्कबिम्बम् । सन्ध्यैव कुमारी तया । गगनमेवाम्बुराशिः तस्मात् । क्रीडया आहृतम् । क्षिप्तं अरविन्दमिव । सिन्धौ । ममज्ज मग्नमभवत् । अत्रार्कबिम्बे अरविन्दतादात्म्यसंभावनारूपः स्वरूपोत्प्रेक्षालङ्कारः । स च स्फुरत्प्रभाकेसरं मकरन्दताम्रमित्युपमाभ्यां सन्ध्याकुमार्याः गगनाम्बुराशेरिति रूपकाभ्यां चोत्थापित इति सङ्करः ॥ ४१ ॥

**फणामणिप्रेक्ष्यखरांशुबिम्बः**
**सन्ध्यासुपर्णीमवलोक्य भीतः ।**
**तापाधिको वासरपन्नगेन्द्रः**
**प्रायेण पातालबिलं विवेश ॥ ४२ ॥**

**फणेति** । फणामणिवत् प्रेक्ष्यः खरांशोः उष्णकिरणस्य बिम्ब

मण्डलं यस्य स तथोक्तः। तापेन आत्मतापोष्मणा पन्नगेन्द्रपक्षे गरलोष्मणा चाधिकः। वासरः दिवस एव पन्नगेन्द्रः फणिराजः। प्रायेण नूनम्। सन्ध्यामेव सुपर्णीं गरुडजननीम्। अवलोक्य। भीतः। पातालबिल नागलोकस्य रन्ध्रम्। विवेश। अत्र उष्णकरस्य पाताले प्रवेश एव, तदनन्तर अदृश्यमानस्य वासरपन्नगेन्द्रस्य फणामणिपुरस्कारेण तत्र प्रवेश उत्प्रेक्ष्यते। अत्र फणामणिप्रेक्ष्येत्युपमा। तापाधिक इति तापद्वयाभेदाध्यवसायरूपातिशयोक्तिः। वासरपन्नगेन्द्रः सन्ध्यासुपर्णीमिति च **रूपकम्**। भीत इति प्रवेशहेतुगर्भविशेषणमिति पदार्थहेतुक **काव्यलिङ्गम्**। प्रायेणेति तद्धेतुत्वोत्प्रेक्षकत्वप्रतिपादनात् **हेतूत्प्रेक्षा**। एतैरुत्थापिता च विवेशेति **स्वरूपोत्प्रेक्षेति** एतेषा **सङ्करः**॥ ४२॥

**प्रदोषरागारुणसूर्यलक्षा-**
**दिशागजो दृप्त इवातिघोरः।**
**कालोपनीतं मधुना समेतं**
**मन्ये पयोधिः कबलं न्यभुङ्क्त॥ ४३॥**

**प्रदोषेति**। दृप्तः गर्वितः। दिशागजः दिग्गजः इव। अतिघोरः अत्यर्थं भयङ्करः। पयोधिः। प्रदोषरागेण अरुणस्य सूर्यस्य लक्षात् व्याजात्। 'लक्ष नपुं शरव्ये न स्त्री व्याजे नियुते न ना' इति यादवः। कालेन समयेन उपनीतम्। मधुना क्षौद्रेण। समेन कबलम्। न्यभुङ्क्त। मन्ये। उत्प्रेक्षाव्यञ्जकोऽय मन्य इति शब्दः। तदुक्त दण्डिना—'मन्ये शङ्के ध्रुव प्रायो नूनमित्येवमादिभिः। उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः।' इति। इद च निपातप्रतिरूपक अव्ययमिति भोजराजः। दिक्शब्दात् 'आपश्चैव हलन्तानां' इति टापि दिशाशब्दस्साधुः। अत्र पयोधे

र्गजेन सादृश्यप्रतिपादनात् तद्गोजयितृत्वेनाभिमतस्य कालस्याधोरणसादृश्यं प्रतीयत **इत्येकदेशवर्त्युपमालङ्कारः**। यद्यपि रूपकमेवैकदेशवर्तीति प्राचीनैः अभ्युपगतम्, तथापि अलङ्कारसर्वस्वकृता 'नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः। पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव।' इत्युदाहृत्य न्यायसाम्यादुपमा चैकदेशवर्तिन्यङ्गीकृता। सूर्यलक्षादिति लक्षशब्देनासत्यत्वपरेण नाय प्रदोषारुणस्सूर्यः किन्तु मधुसम्भिन्नकबल इति प्रतीते**रपह्नुतिः**। एताभ्यामुत्थापिता च समुद्रे सूर्यमज्जनेन गम्यमाननिमित्तेन तद्गोकृत्वोत्प्रेक्षेति **सङ्करः** ॥ ४३ ॥

**तदा तमः प्रोषितचन्द्रसूर्ये**
**दोषामुखे दूषितसर्वनेत्रम् ।**
**वियोगिनां शोकमयस्य वह्ने-**
**राशागतो धूम इवान्वभावि ॥ ४४ ॥**

**तदेति**। तदा तस्मिन् काले। प्रोषितचन्द्रसूर्ये। दोषामुखे रजनीप्रारम्भे। दूषितसर्वनेत्रं उपहतसर्वलोचनम्। तमः। वियोगिनां विरहिणाम। शोकमयस्य वह्नेः शोकरूपस्याग्नेः। आशागतः दिशः प्राप्तः। धूम इव। अन्वभावि अनुभूतम्। दोषापदमव्ययमित्यमरसिंहादिभिरुक्तम्। 'तत. कथाभिस्समतीत्य दोषामारुह्य सैन्यैस्सह पुष्पक सः।' इति भट्टिप्रयोगादनव्ययमप्याहुः। शोकमयस्येति स्वरूपार्थे मयटप्रत्ययः। अत्र नेत्रदूषकत्वसाम्यनिमित्ता शोकमयस्य वह्नेरित्य**पह्नुतिसंकीर्णा** धूमत्वोत्**प्रेक्षा** ॥

**सतारपुष्पा धृतपल्लवश्रीः**
**प्रच्छायनीरन्ध्रतमःप्रताना ।**

**विश्वाभिनन्द्या ववृधे तदानीं**
**वैहायसी कापि वसन्तवन्या ॥ ४५ ॥**

**सतारेति** । ताराणि नक्षत्राण्येव पुष्पाणि तैस्सह वर्तत इति सतारपुष्पा । धृतपल्लवश्रीः सन्ध्याभ्रतेजसा धृतप्रवाळशोभा । छायानां समृद्धिः प्रच्छायम् । समद्रमितिवत् समृद्ध्यर्थेऽव्ययीभावः । तदेव नीरन्ध्रतमप्रतान ध्वान्तप्रचयो यस्यां सा तथोक्ता । विश्वाभिनन्द्या जगदभिनन्दनीया । वैहायसी विहायस्याकाशे भवा । कापि आश्चर्यभूता । वसन्तवन्या वसन्तकालवनराजि. । ववृधे वृद्धिसपना । वसन्तवन्येति सन्ध्यैवाध्यवसीयते । वनशब्दस्य पाशादिपाठात् समूहार्थे यप्रत्ययः । अत्र सतारपुष्पेति **रूपकम्** । धृतपल्लवश्रीरित्यत्र अन्यस्य श्रीरन्यत्र न सभवतीति असभवद्वस्तुसबन्धेन पल्लवश्रीसदृशीश्रियोऽवगमनात् **निदर्शना** । प्रच्छायेत्यादावुपमा । एतैरुत्थापिता च सन्ध्याया वसन्तवनपङ्क्त्यभेदाध्यवसायरूपातिशयोक्तिरिति **संकरः** ॥ ४५ ॥

**अलक्ष्यत श्यामलमन्तरिक्षं**
**ताराभिरादर्शितमौक्तिकौघम् ।**
**निवत्स्यतो विश्वपतेरवन्यां**
**कालेन भृत्येन कृतं वितानम् ॥ ४६ ॥**

**अलक्ष्यतेति** । श्यामलम् । ताराभि. नक्षत्रै. । आदर्शितमौक्तिकौघ प्रदर्शितमुक्ताफलनिकरम् । अन्तरिक्षम् । अवन्यां भूमौ । निवत्स्यतः निवास करिष्यतः । विश्वपतेः कृष्णस्य । भृत्येन । कालेन । कृतम् । वितानमिव अलक्ष्यत दृष्टं । अत्र ताराणां मौक्तिकत्वरूपणेन **रूपक**सकीर्ण **उत्प्रेक्ष**-

**लङ्कारः**। निवत्स्यत इत्यत्र 'वस निवासे' इति धातोर्लृटः शतरि 'सः स्यार्धधातुके' इति सकारस्य तकारादेशः ॥ ४६ ॥

**अभृङ्गनादप्रतिपन्नमौना**
**निमेषभाजो नियतं वनस्थाः ।**
**दूरं गते स्वामिनि पुष्करिण्य-**
**स्तत्प्राप्तिलाभाय तपो वितेनुः ॥ ४७ ॥**

**अभृङ्गेति**। स्वामिनि नाथे सूर्ये। गते अस्तमिते सति। नियतम्। वनस्थाः सातत्येन जलस्थाः नियमेन काननस्थाश्च। 'वन काननतीरयोः' इति विश्वः। अभृङ्गनादेन भृङ्गनादाभावेन प्रतिपन्नमौनाः प्राप्तवाङ्नियमाः। निमेषभाजः मुकुलीभावभाजः ध्याननिमीलनभाजश्च। पुष्करिण्यः पद्मिन्यः। तस्य सूर्यस्य प्राप्तेर्लाभाय सिद्धये। तपः। वितेनुः चक्रुः। अत्र भृङ्गनादाभावे मौनत्वारोपस्य तपश्चर्योपयोगात् **परिणामः**। सूर्यस्य पतित्वरूपणात् पद्मिनीनां तत्पत्नीत्वं गम्यत इति एकदेशवर्ति**रूपकम्**। पद्मसंकोचे निमेषाभेदाध्यवसायात् लक्षणामूला**तिशयोक्तिः**। तत्प्राप्तिलाभायेति फलो**त्प्रेक्षा**। तपो वितेनुरिति **स्वरूपोत्प्रेक्षा** वाचकाप्रयोगाद्गम्या। एतेषां च **सङ्करः** ॥ ४७ ॥

**निमीलितानां कमलोत्पलानां**
**निष्पन्नसख्यैरिव चक्रवाकैः ।**
**विमुक्तभोगैर्विदधे विषण्णै-**
**र्विबोधवेलावधिको विलापः ॥ ४८ ॥**

**निमीलितानामिति**। चक्रवाकैः कोकैः (कर्तृभिः)। निमीलितानां

मुकुलितानाम् । कमलोत्पलानां पद्मेन्दीवराणाम् । निष्पन्नसख्यैः उत्पन्नसौहार्दैः । तद्विषयसौहार्दवद्भिरिव, विषण्णैः दुःखितैः । विमुक्तभोगैः त्यक्तस्त्रीसभोगैश्च सद्भिः । (तेषां कमलोत्पलानाम्) विबोधवेला विकाससमयः प्रभातकालः अवधिर्यस्य तदवधिकः । 'शेषाद्विभाषा' इति कप्रत्ययः । विलापः शोकशब्दः । विदधे चक्रे । कर्मणि लिट् । यथा क्वचिदुत्पन्नसौहृदास्तस्य मूर्च्छादिदुरवस्थायां विषण्णाः ताम्बूलादिभोगान् विहाय तत्प्रबोधपर्यन्त विलपन्ति तद्वदिति भाव. । अत्र विरहप्रयुक्तचक्रवाकविलापे कमलोत्पलसख्यस्य हेतुत्वोत्प्रेक्षणात् **हेतूत्प्रेक्षालङ्कारः** । विशेषणसाम्यात् कमलोत्पलानां मूर्च्छितपुरुषत्वप्रतीतेस्**समासोक्ति**श्चेति तयोरन्योन्यानुप्राणितत्वेन **सङ्करः** । ननु रात्रौ नीलोत्पलानां विकासः प्रसिद्धः । साहित्यचिन्तामणौ च कविसमयसिद्धपरिगणनप्रस्तावे तथैव कथितम् । 'रात्रावेव नीलोत्पलविकास. । दिवैव कमलविकासः' इति । कथमत्र तेषां रात्रौ निमीलनमुच्यते । सत्यम् । 'इदमाविःस्मितज्योत्स्न स्निग्धनेत्रोत्पल मुखम् । इति ज्योत्स्नोत्पलायोगादयुक्त नाम रूपकम्' इति उदाहरता दण्डिना रात्रौ तेषां निमीलनमङ्गीकृतम् । तद्व्याख्यानेऽप्युक्तम् । 'यदा ज्योत्स्ना चन्द्रिका तदोत्पल न विकसतीति ज्योत्स्नोत्पलयोगोऽसङ्गतः' इति । तस्मादुभयथापि कविसमयप्रसिद्धेरुपपन्नमेतत् । अत एवोत्तरसर्गेऽपि रात्रौ यमुनावर्णने वक्ष्यति । 'निमिषितासितनीरजलोचना मुकुलिताब्जमुखी सवितुस्सुता' इति । प्रभातवर्णनसर्गे च नीलोत्पलविकासोऽनेकत्र वर्णयिष्यते । श्रीमद्रामायणे च दिवा गङ्गावर्णने दृश्यते । 'क्वचित्फुल्लोत्पलच्छन्नां क्वचित् पद्मवनाश्रिताम् ।' इति ॥

**तमिस्रनीलाम्बरसंवृताङ्गी**
**श्यामा बभौ किञ्चिदतीत्य सन्ध्याम् ।**

**प्राचीनशैले समयान्निगूढं**
**समुद्यता चन्द्रमिवाभिसर्तुम् ॥ ४९ ॥**

**तमिस्रेति** । किञ्चित् सन्ध्यां अतीत्य । तमिस्रेण तमसैव नीलाम्बरेण नीलवस्त्रेण संवृत संवरण अङ्गति गच्छतीति संवृताङ्गी । अगिगताविति धातोः कर्मण्यण् । संवृताङ्गी अवकुण्ठितावयवा । श्यामा निशा सैव श्यामा युवतिः । 'श्यामा षोडशवर्षा स्त्री त्रिवृता शारिबा निशा ।' इति रत्नमाला । प्राचीनशैले पूर्वाचले । प्राचीनशब्दशक्त्या प्राक्परिचित-सङ्केतस्थान इत्यपि गम्यते । समयात् कालादेव सङ्केतात् । '**समयः** कालसिद्धान्तप्रतिज्ञाशपथेषु च । सङ्केताचारयोश्च' इति रत्नमाला । निगूढ निलीनम् । चन्द्र अभिसर्तुम् । समुद्यतेव बभौ । अभिसारिकापि प्रकाशभिया किञ्चित् सन्ध्यामतीत्य तमसि नीलाम्बरेणावकुण्ठिता अभिसरतीति भावः । अत्र तमिस्रनीलाम्बरेति नैल्यस्य सामान्यधर्मस्य प्रयोगात् उपमाबाधे परिशेषाद्रूपकसिद्धौ तदुत्थापित श्यामासमया-दित्यनयोः **श्लिष्टरूपकम्** । ततश्चन्द्रस्य नायकत्वरूपण गम्यत इत्येक-वर्तिरूपकम् । तदुत्थापिता चाभिसारिकात्वोत्प्रेक्षेति **सङ्करः** ॥४९॥

**निशाकरेण प्रतिपन्नसत्वा**
**निक्षिप्तदेहेव पयोधितल्पे ।**
**जगत्समीक्ष्या जहती च कार्श्यं**
**प्राची दिशा पाण्डरतामयासीत् ॥ ५० ॥**

**निशेति** । निशाकरेण चन्द्रेण । प्रतिपन्नसत्वा प्राप्तगर्भा । पयोधौ समुद्र एव तल्पे । निक्षिप्तदेहा तत्संश्लेषात् तत्र न्यस्तदेहेव स्थिता ।

जगता समीक्ष्या उदेष्यदिन्दुकरसंपर्कात् द्रष्टुं योग्या । कृशत्वं जहती अन्धकारावरणेन पूर्वं कार्श्यं प्राप्येव स्थिताद्य तत्त्यजन्ती । प्राची । दिशा । पाण्डरतां शुभ्रताम् । अयासीत् अगमत् । प्राप्तगर्भा तल्पे न्यस्तदेहा कान्त्यतिशयाज्जगतां दृष्टियोग्या कार्श्यं मुञ्चन्ती सती शुभ्रतां गच्छतीति भावः । पडि गताविति धातोः 'पण्डेर्दीर्घश्च' इत्यरन् प्रत्यये दीर्घे च पाण्डर-शब्दः । पाण्डुर इति उकारयुक्तस्तु सितपीतसंयोगरूपपाण्डुवाची । निशा-करेणेत्यत्र प्रकृत्यादित्वात्तृतीया । अत्र प्राच्या गर्भवतीत्वरूपण गम्यत इत्येकदेशवर्तिरूपकालङ्कारः । स च पयोधितल्प इति रूपकानुप्रा-णितया निक्षिप्तदेहेवेत्युत्प्रेक्षया अन्धकारावरणे कार्श्याभेदाध्यवसायरूपा-तिशयोक्त्या चानुप्राणित इति सङ्करः ॥ ५० ॥

तमःप्रसङ्गेन विमुच्यमाना
गौरप्रभा गोत्रभिदाभिनन्द्या ।
विधूदयारम्भविशेषदृश्या
प्राची दिशाभासत देवकीव ॥ ५१ ॥

**तम इति** । तमःप्रसङ्गेन अन्धकारसम्पर्केण पक्षे भगवत्प्रवेशात् तमो गुणस्य पापस्य शोकस्य वा सम्पर्केण । विमुच्यमाना । गौरप्रभा पाण्डर-शोभा । गोत्रभिदा अचलभिदा शक्रेण । अभिनद्या तदीयत्वात् पक्षे देवकार्यार्थं अवतरिष्यतः कृष्णस्य गर्भे भरणात् । विधोः चन्द्रस्य उदयार म्भेण विशेषदृश्या कृत्स्नतमोनिरासादतिशयेन द्रष्टुं योग्या । पक्षे विधोः कृष्णस्याविर्भावारम्भादतिशयेन रमणीया । प्राची । दिशा । देवकीव । अभासत । उपमालङ्कारः । तमःप्रसङ्गेनेति विधूदयेति च श्लेषमूलका भेदाध्यवसायरूपातिशयोक्त्यनुप्राणित इति सङ्करः । 'तमोऽन्धकारे

स्वर्भानौ विघ्ने शोके गुणान्तरे'। 'विधुःशशाङ्के कर्पूरे हृषीकेशे च राक्षसे' इति च विश्वः। 'गौरो गुणे सिते पीते' इति रत्नमाला ॥ ५१ ॥

**अपत्यलाभं यदुवीरपत्न्या**
**महोदधौ मग्नसमुत्थितेन ।**
**तद्वंशमान्येन समीक्ष्य पूर्वं**
**प्राप्तं प्रतीतेन पुरोधसेव ॥ ५२ ॥**

**अपत्येति**। यदुषु यदुवंश्येषु वीरः श्रेष्ठो वसुदेवः 'वीरस्तु सुभगे श्रेष्ठे' इति विश्वः। तस्य पत्न्याः। अपत्यलाभं भविष्यन्तम्। समीक्ष्य आलोच्य। महोदधौ। मग्नसमुत्थितेन निमज्ज्योत्थितेन। पूर्वकालेत्यादिना समासः। तद्वंशमान्येन यदुवंशकूटस्थतया पूज्येन चन्द्रमसा। प्रतीतेन सादरेण 'प्रतीतः सादरे ख्याते' इति विश्वः। पुरोधसा पुरोहितेनेव। पूर्वं अपत्योत्पत्तेः प्रागेव। प्राप्तं उदयाय प्रत्यागतम्। कुलक्रमागततया कुलपूज्यः पुरोहितः पुत्रोत्सवे जातकर्मादि कारयितुं स्नातस्सादरं प्रागेवागच्छतीति तत्तादात्म्यसम्भावनारूप**स्वरूपोत्प्रेक्षालङ्कारः**। अपत्यलाभालोचनस्य तत्प्राप्तिहेतुतयोत्प्रेक्षणा**द्धेतूत्प्रेक्षा**चेति तयोः **सङ्करः**। यदुशब्दस्य कूटस्थक्षत्रियविशेषवाचिनः तद्वंश्येषु लक्षणया वृत्तिः। न तु 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इति अपत्यप्रत्ययलुक्। यदुशब्दस्य जनपदवाचित्वाभावेन ततस्तद्राजप्रत्ययासम्भवात्। अत एव 'विजह्रुर्यादवास्तत्र विबुधस्त्री वरप्रदाः' इति तेषु यादवशब्दप्रयोगोऽप्यग्रे दृश्यते। यदि तस्य जनपदवाचित्वं कैश्चिदभ्युपगम्यते तदा वंश्येषु यदुशब्दः तद्राजप्रत्ययलुका भवति। यादवशब्दस्तु तस्येदमित्यण्प्रत्ययेनेति द्रष्टव्यम् ॥ ५२ ॥

**क्ष्वेलोपमे सन्तमसे निरस्ते**
**सोमं सुधास्तोममिवोद्वमन्ती ।**
**दुग्धोदवेलेव दुदोह लक्ष्मी-**
**माशा मनोज्ञाममरेन्द्रमान्या ॥ ५३ ॥**

**क्ष्वेलेति** । क्ष्वेलोपमे गरलसदृशे । सन्तमसे विष्वक्तते तमसि । निरस्ते प्रथममाविर्भूतैः किरणाङ्कुरैः निराकृते सति । सुधास्तोम अमृतपुञ्जमिव । सोम उद्वमन्ती उद्गिरन्ती आविर्भावयन्तीति यावत् । अत एव गौणत्वादग्राम्यता । यथाह दण्डी । 'निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्तु ग्राम्यकक्ष्यां विगाहते ॥' इति । अमरेन्द्रस्य मान्या । आशा प्राची । दुग्धोदस्य वेला मथनकालीना जलवृद्धिरिव । 'वेलाब्धितीराम्बुवृद्ध्योः' इति रत्नमाला । लक्ष्मीं शोभामेव लोकमातरम् । दुदोह जनयामासेत्यर्थः । अनेकेवशब्दा**र्थोपमालङ्कारः** । स च लक्ष्मीमिति **श्लेषमूलातिशयोक्त्य**नुप्राणित इति **सङ्कर**. ॥५३॥

**तमस्समाक्रान्तिवशेन पूर्वं**
**जज्ञे निमग्नैरिव भूतधात्र्याम् ।**
**ततस्तुषारांशुकरावगूढै-**
**रुत्तभ्यमानैरिव शैलशृङ्गैः ॥ ५४ ॥**

**तम इति** । पूर्वं चन्द्रोदयारम्भात् प्राक् । शैलशृङ्गैः । तमस्समाक्रान्तिवशेन अन्धकाराक्रमणायत्ततया । 'वश आयत्ततायां स्यात्' इति विश्वः । भूतधात्र्यां भूमौ । निमग्नैरिव । जज्ञे जातम् । जनिधातोर्भावे लिट् । ततः चन्द्रोदयारम्भे तु । तुषारांशुकरावगूढैः चन्द्रकिरणावगुण्ठितैः ।

उत्तभ्यमानैः इव । जज्ञ इत्यनुषङ्गः । पूर्वं अन्धकारवृतत्वेनादर्शनात् पर्वतशिखराणि भूमौ निमग्नानीवेत्युत्प्रेक्षा । तदुदयारम्भे भूमौ पतद्भिः किरणैरुपरिभागमारभ्य प्रकाश्यमानानि तान्युत्तम्भनेन पुनरुन्मज्जन्तीवेत्यपरोत्प्रेक्षेति तयोः परस्परानुप्राणितत्वेन **सङ्करः** ॥ ५४ ॥

**दिशस्तदानीमवनीधराणां**
**सगैरिकैः पारदपङ्कलेपैः ।**
**चकाशिरे चन्द्रमसो मयूखैः**
**पञ्चायुधस्येव शरैः प्रदीप्तैः ॥ ५५ ॥**

**दिश इति** । तदानीम् । दिशः अवनीधराणां पर्वतानाम् । सगैरिकैः पारदपङ्कलेपैः कनकसहितरसकर्दमलेपैः, तद्वदारक्तैः । चन्द्रमसः मयूखैः । प्रदीप्तैः प्रज्वलितैः । पञ्चायुधस्य शरैरिव । चकाशिरे । अत्र सगैरिकैरित्यादिरूपकस्य पञ्चायुधस्येत्याद्युत्प्रेक्षायाश्च **संसृष्टिः** । 'गैरिक कनके धातौ' इति । 'रसस्तु पारदे सूदे' इति च विश्वप्रकाशः ॥ ५५ ॥

**समुन्नमन्ती कुटिलायतात्मा**
**शशाङ्कलेखोदयदृश्यकोटिः ।**
**वियोगिचेतोलवने प्रवीणा**
**कामोद्यता काञ्चनशङ्कुलेव ॥ ५६ ॥**

**समुन्नमन्तीति** । प्रथम समुन्नमन्ती समुद्गच्छन्ती । कुटिलायतात्मा वक्रदीर्घाकारा । शशाङ्कस्य लेखा । उदये प्रथमदृश्या कोटिः यस्याः सा । कामेन उद्यता । वियोगिनां विरहिजनानां चेतसो लवने । प्रवीणा । काञ्चनशङ्कुला कनकमयी लवनशस्त्रीव । चकाशे । **स्वरूपोत्प्रेक्षालङ्कारः** ॥

तमांसि दुर्वारबलस्सकालः
प्रायो विलोप्तुं सहसा दिशां च ।
मनांसि कामश्च मनस्विनीनां
प्रायुङ्क्त शैत्याधिकमर्धचन्द्रम् ॥ ५७ ॥

**तमांसीति** । दुःखेन वार्यत इति दुर्वार बल यस्य सः । कालः समयः । कामः मन्मथश्च । क्रमेण दिशां तमांसि । मनस्विनीनां मनांसि च । प्रायेण प्रायः । सहसा सद्यः । विलोप्तु विनाशयितुम् । शैत्येन शीतत्वेन, उत्तेजितत्वेन च अधिकम् अर्धभाग चन्द्रश्च त । अर्धचन्द्ररेखाम्, आयुधविशेष च । प्रायुङ्क्त । अत्र रात्रिवर्णने प्राकरणिकयोः कालकामयोः अर्धचन्द्रप्रयोगरूपैकक्रियान्वयेन परस्परौपम्यप्रतीतेस्**तुल्ययोगितालङ्कारः** । स च शैत्याधिकमर्धचन्द्रमिति श्लेषमूल**ातिशयोक्त्यनु**प्राणित इति **सङ्करः** । 'अर्धचन्द्रस्तु चन्द्रके । गलहस्ते बाणभेदे' इति विश्वः ॥ ५७ ॥

करेण संकोचितपुष्करेण
मदप्रतिच्छन्दकलङ्कभूमा ।
क्षिप्त्वा तमश्शैवलमुन्ममज्ज
मग्नो दिशानाग इवेन्दुरब्धेः ॥ ५८ ॥

**करेणेति** । मदप्रतिच्छन्दः मदजलसदृशः कलङ्कस्य भूमा बाहुल्य यस्य सः । इन्दुः । संकोचितानि पुष्कराणि पद्मानि येन तेन । करेण किरणेन । पक्षे सकोचितस्वाग्रेण हस्तेन । 'पुष्कर करिहस्ताग्रे' इति 'बलिहस्तांशवः कराः ।' इति चामरः । तमश्शैवल शैवलसदृशं तमः । क्षिप्त्वा

निरस्य । मग्नः दिशानागः दिग्गज इव । अब्धेः उन्ममज्ज उत्तस्थौ । अत्र करादिशब्दश्लेषमूलातिशयोक्त्यनुप्राणितोपमालङ्कारः ॥ ५८ ॥

**मदोदयाताम्रकपोलभासा**
**शक्रस्य काष्ठा शशिना चकाशे ।**
**उदेयुषा व्यञ्जयितुं त्रिलोकीं**
**नाथस्य सा नाभिरिवाम्बुजेन ॥ ५९ ॥**

**मदेति** । शक्रस्य काष्ठा इन्द्रस्य दिक् । त्रयाणां लोकानां समाहारस्त्रिलोकी ताम् । व्यञ्जयितुं प्रकाशयितुम् । उदेयुषा उदितवता । मदोदयाताम्रकपोलभासा तत्क्षणोदितत्वादासवादिमदजननारुणगण्डतुल्यरुचा । शशिना । नाथस्य स्वामिनो नारायणस्य । सा प्रसिद्धा । नाभि । अम्बुजेनेव । चकाशे । भगवन्नाभीपद्ममपि चतुर्मुखोत्पादनद्वारा त्रिलोकीं व्यञ्जयितुमुत्पादयितु उदितमाताम्रञ्च । 'सुदर्शनं चास्य रराज शौरेस्तच्चक्रपद्मं सुभुजोरुनालम् । यथादिपद्मं तरुणार्कवर्णं रराज नारायणनाभिजातम् ।' इति भारतवचनात् । **उपमालङ्कारः** । उदेयुषेति 'उपेयिवाननाश्वाननूचानश्च' इति इणधातोः क्वसुप्रत्ययान्तनिपातनात्साधुः । तत्र वृत्तिकृता उपोपसर्गग्रहणमतन्त्रमित्युपसर्गान्तरेऽपि तदनुज्ञानात् ॥ ५९ ॥

**समीपतस्सन्तमसाम्बुराशेः**
**बभार शङ्खाकृतिरिन्दुबिम्बः ।**
**पित्तोपरागादिव पीतिमानं**
**दोषाविलप्रोषितदृष्टिदत्तात् ॥ ६० ॥**

**समीपत इति** । सन्तमसं विष्वक्तमः अम्बुराशिरिव सन्तमसा-

म्बुराशिरित्युपमितसमासः, शङ्खाकृतिरित्युपमानानुरोधात् । तस्य । समीपत. समीपे । आद्यादित्वात् तसिः । शङ्खस्याकृतिरिवाकृतिर्यस्य शङ्खाकृति. । इन्दुबिम्बः । दोषा रात्रिः तत्राविला प्रियाविरहदुःखोद्गतबाष्पकलुषा, दोषेण प्रमाप्रतिबन्धकेन विकृतेति श्लेषमूलकाभेदाध्यवसायरूपातिशयोक्तिः । तथाभूतया प्रोषितानां प्रवासिनां दृष्ट्या दत्तात् आहितात् । पित्तोपरागात् पित्तद्रव्यसम्पर्कादिव । पीतिमानं पीतवर्णम् । बभार । 'दुष्टलोचनानां पुंसां लोचनरश्मिभिः निर्गत्य विषयान्व्याप्नुवतः पित्तद्रव्यस्य पीतिम्नावकुण्ठनात् तेषु पीतिमभ्रमः इति तार्किकप्रक्रियया, एव हेतूत्प्रेक्षा उपमातिशयोक्त्यनुप्राणितेति सङ्करः ॥ ६० ॥

कृशोदरीलोचनकृष्णलक्ष्मा
राज्याः समिद्धोदयराग इन्दुः ।
कस्तूरिकाकुङ्कुमचित्रितात्मा
कर्पूरविन्यास इवान्वभावि ॥ ६१ ॥

**कृशोदरीति** । कृशोदरीणां लोचनमिव कृष्णं लक्ष्म चिह्नं यस्य सः । समिद्धोदयरागः दीप्यमानोदयारुणिमा । इन्दुः । कस्तूरिकाकुङ्कुमाभ्यां चित्रितात्मा चित्रीकृताकृति. । राज्याः । कर्पूरविन्यास. कर्पूरतिलकविन्यास इव । अन्वभावि अनुभूत. । स्वस्य शुभ्रत्वात् कलङ्कोदयरागयोगाच्च तथोत्प्रेक्षा । विशेषणसाम्याद्रात्रेर्वनितात्वप्रतीतेस्समासोक्तिश्चेति तयोरन्योन्यानुप्राणितत्वेन सङ्करः ॥ ६१ ॥

प्रसादमन्तःकरणस्य दाता
प्रत्यक्षयन्विश्वमिदं प्रकाशैः ।

तमश्च रागं च विधूय चन्द्रः
सम्मोदनं सत्वमिवोल्ललास ॥ ६२ ॥

**प्रसादमिति** । अन्तःकरणस्य प्रसादं दाता आनन्ददानशीलः । ताच्छील्ये तृन् प्रत्ययः । 'नलोकाव्यय' इत्यादिना तद्योगे षष्ठीप्रतिषेधात् द्वितीया । इद विश्वम् । प्रकाशैः आलोकैः । प्रत्यक्षयन् प्रत्यक्ष कुर्वन् । चन्द्रः । तमः अन्धकारञ्च । राग उदयारुण्यञ्च । विधूय त्यक्त्वा । सम्मोदन आनन्दकरम् । सत्वमिव शुद्धसत्वामव । उल्ललास बभासिवत्यर्थः । सत्वमपि तमः तमोगुणम् । राग रजोगुणञ्च । विधूय कदाचिद्विवर्धते ' रजस्तमश्चाभिभूय सत्व भवति भारत । रजस्सत्व तमश्चैव तमस्सत्व रजस्तथा ॥' इति गीतोक्तेः । तथा विवृद्धञ्च सत्व मनस प्रसादमैकाग्र्ययोग्यता ददाति । ' मनःप्रसादः सौम्यत्व मौनमात्मविनिग्रहः ।' इत्यारभ्य ' अफलाकाङ्क्षिभिर्युक्तैरसात्विक परिचक्षते ।' इति गीतासु मन प्रसादस्य सत्वाधीनत्वोक्तेः । तथा विवृद्धञ्च सत्व विश्वञ्च प्रकाशैर्ज्ञानैः प्रत्यक्षयति । 'सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते । ज्ञान यदा तदा विद्यात् विवृद्ध सत्वमित्युत ॥' इति गीतोक्तेः । **उपमालङ्कारः** । उपमानोपमेययोर्भिन्नलिङ्गदोषस्तु कविभिर्नात्यन्तमाद्रियते । **उत्प्रेक्षा** वा । लिङ्गभेदबाधकमत्वेन उपमात्वनिरासे पारिशेष्यात् इवशब्दस्य सम्भावनापरत्वोपपत्तेः । उत्प्रेक्षायां च लिङ्गभेदस्यादोषत्व वामनालङ्कारादिषु स्फुटम् । विस्तरभिया नेह लिख्यते ॥ ६२ ॥

निशाकरो वारिधिनिस्वनानां
निष्पादकः कुन्दरुचिश्चकाशे ।

उदेष्यतश्चक्रभृतो नियोगात्
प्रादुर्भवन् प्रागिव पाञ्चजन्यः ॥ ६३ ॥

**निशाकर इति** । कुन्दस्य माघ्यपुष्पस्य रुचिरिव रुचिर्यस्येति कुन्दरुचिः । वारिधिनिस्वनानां क्षोभणेन समुद्रघोषाणाम् । निष्पादकः । निशाकरः । उदेष्यतः । चक्रभृतः कृष्णस्य । नियोगात् । प्राक् तत्प्रादुर्भावात् पूर्वम् । प्रादुर्भवन् । पाञ्चजन्यः तदीयशङ्ख इव । चकाशे । पाञ्चजन्योऽपि धवलत्वात्कुन्दरुचिः । कुन्दे मुकुन्दे रुचिराभिरतिर्भक्तिः अस्येति वा कुन्दरुचिः । 'कुन्द माघ्ये च कुन्दो ना निधिभेदमुरद्विषोः ।' इति रत्नमाला । वारिधिनिस्वनानां सादृश्यव्यपदेशेन तत्सदृशानां गम्भीरस्वनानां निष्पादकश्च भवति । अतस्तादूप्येणोत्प्रेक्षालङ्कारः ॥ ६३ ॥

मृगेण निष्पन्नमृगाजिनश्रीः
स्वपादविक्षेपमितान्तरिक्षः ।
मुरद्विषो वामनमूर्तिभाजः
पर्यायतामन्वगमच्छशाङ्कः ॥ ६४ ॥

**मृगेणेति** । मृगेण । निष्पन्ना मृगाजिनस्य श्रीः शोभा यस्य सः । स्वपादानां स्वकिरणानां विक्षेपेण परितः प्रसारणेन मित लोकैः प्रत्यक्षेण प्रमित अन्तरिक्ष यस्य सः । शशाङ्कः । वामनमूर्तिभाजः । मुरद्विषः ब्रह्मचर्याभिनयेन मृगाजिन धारयतः स्वचरणविक्षेपेण परिमितगगनस्य च । पर्यायतां सादृश्य । अन्वगमत् । **उपमालङ्कारः** ॥ ६४ ॥

जिगाय शङ्खाश्रितशैवलाभ-
श्चारुद्युतेश्चन्द्रमसः कलङ्कः ।

उदीयमानस्य महोर्मियोगात्
मामिच्युतं सागरमूलपङ्कम् ॥ ६५ ॥

**जिगायेति** । शङ्काश्रितशैवलाभ. शङ्कमाश्रितस्य शवलस्य सदृशी आभा यस्य सः । 'आभाप्रख्योपमाभिख्याः प्रकारः सनिभ निभम् । नीकाशाद्याश्च साम्यार्थाः समे स्युः शब्दतः परे ।' इति यादवः । चारुश्रुतेः मनोज्ञप्रभस्य । चन्द्रमस. । कलङ्क । उदीयमानस्य पातालात्समुद्ररन्ध्रमार्गेणोद्यतः तस्य । महोर्मिभिः कल्लोलै योगात् । सामिच्युतम् । सागरस्य । मूलपङ्कम् । जिगाय जयति स्मेत्युत्प्रेक्षा । यद्यपि 'जयति' इति नोत्प्रेक्षावाचकः किं तु 'स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति' इत्युपमावाचकेषु दण्डिना पठितत्वादुपमायां निरूढः, तथापि चन्द्रबिम्बलग्नसागरमूलपङ्कस्य उपमानस्य अप्रसिद्धतया ताद्रूप्येणोत्प्रेक्षाया एवौचित्यात् तत्रैव तस्य शब्दस्य पर्यवसानमिति **उपमोपक्रमोत्प्रेक्षा** ॥६५॥

उदेत्य तुङ्गादुदयाद्रिशृङ्गात्
तमोगजानग्रकरेण निघ्नन् ।
निशाकरस्तन्मदलेपलक्ष्मा
सिताभिशुः सिंहदशामयासीत् ॥ ६६ ॥

**उदेत्येति** । तुङ्गात् । उदयाद्रेः शृङ्गात् । उदेत्य उद्गत्य । तमांस्येव गजान् । अग्रकरेण अग्रकिरणेनैवाग्रहस्तेन । निघ्नन् । तेषां मदस्य लेप इव स्थितं लक्ष्म यस्य सः तन्मदलेपलक्ष्मा । सिताभिशुः शुभ्रमयूखः । निशाकरः । सिंहस्य । दशाम् । अयासीत् अगमत् । अत्र अन्यस्य दशा तदन्यस्य न संभवतीति तद्दशासादृश्यावगमादसंभवद्वस्तुसंबन्धनिबन्धनो

**निदर्शनालङ्कारः**। स च तमोगजानिति रूपकेण अग्रकरेणेति श्लिष्टरूपकेण तन्मदलेपत्वोत्प्रेक्षया च उत्थापित इति **सङ्करः**। अग्र चासौ करश्चेत्यवयवावयविनोरभेदात्समानाधिकरणसमासः। यथाह वामनः—'हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदाभ्याम्' इति। अभिशुशब्दस्तालव्यान्त। 'अभीषुः प्रग्रहे रश्मौ' इति षान्तेष्वमरकोशे। अयं वल्मिकवल्मीकवद्ध्रस्वमध्यो दीर्घमध्यश्च। 'अभीशुभिः सूर्य इवाभिदीप्त' इत्यग्रे दीर्घमध्योऽपि वक्ष्यते ॥ ६६ ॥

**निशीथलक्ष्म्या इव पुण्डरीकं**
**निर्वेशसिन्धोरिव फेनचक्रम्।**
**तमन्ववैक्षन्त विलासतन्त्रा**
**तारामणीनामिव सूतिशुक्तिम् ॥ ६७ ॥**

**निशीथेति**। विलासः तन्त्र प्रधान येषा ते विलासतन्त्राः विलासप्रधाना विलासिनः। 'तन्त्र स्वराष्ट्रव्यापारे तन्तुवाये परिच्छदे। शास्त्रे प्रधाने सिद्धान्ते प्रयोगेऽध्वरकर्मणाम्।' इति प्रकाशः। त चन्द्रम्। निशीथस्य लक्ष्मीः शोभैव कमला तस्याः। पुण्डरीकमिव। निर्वेशः सुखभोग एव सिन्धुः तस्य फेनचक्र फेनपुञ्जमिव। तारा नक्षत्राण्येव मणयः तेषाम्। सूतेः उत्पत्तेः शुक्तिमिव। अन्ववैक्षन्त उत्प्रेक्षन्तेत्यर्थः। अत्रैकस्यैव चन्द्रस्य बहुधोत्प्रेक्षणान्**मालारूपोत्प्रेक्षालङ्कारः**। तत्राद्योत्प्रेक्षा लक्ष्मीशब्दश्लेषमूलातिशयोक्त्युत्थापिता। द्वितीयतृतीये रूपकोत्थापिते इति भेदः ॥ ६७ ॥

**उदारतारागणबुद्बुदौघ-**
**श्चन्द्रेण संपन्नसुधाप्रसूतिः।**

अशेषदृश्यामधिगम्य लक्ष्मी-
मालोकदुग्धोदधिराबभासे ॥ ६८ ॥

**उदारेति** । उदारो महान् तारागण एव बुद्बुदौघो यस्य स तथोक्तः । 'उदारो दातृमहतोः' इत्यमरः । चन्द्रेण । सपन्ना सुधाप्रसूतिः येन सः । आलोकः चन्द्रप्रकाश एव दुग्धोदधिः । अशेषदृश्यां विश्वरमणीयाम् । लक्ष्मीं शोभामेव कमलाम् । अधिगम्य लब्ध्वा । आबभासे । श्लेषानुप्राणितसावयवरूपकालंकारः ॥ ६८ ॥

प्रकाशयन्विश्वमिदं यथाव-
च्चन्द्रोदयोद्दीपितसौम्यतारः ।
आसीन्निशीथो जगतः प्रभूता-
दन्धस्य दैवादिव दृष्टिलाभः ॥ ६९ ॥

**प्रकाशयन्निति** । विश्वं अखिलम् । इदं वस्तुजातम् । यथावत् सम्यक् । प्रकाशयन् । चन्द्रस्य उदयेन उद्दीपिताः परिष्कृताः सौम्याः मनोज्ञाः ताराः यस्मिन् सः । निशीथः अर्धरात्रः । जगतः लोकस्य । प्रभूतात् प्रचुरात् । दैवात् अदृष्टात् । अन्धस्य अपगतचक्षुषः । दृष्टिलाभ इव । आसीत् । दृष्टिपक्षे चन्द्रोदयाख्येन वैद्यमतेन गुलिकाविशेषेण उद्दीपिता उत्तेजिता रूपग्रहणयोग्यत्वं प्रापिता सौम्या काचपटलादिविगमादनुग्रा तारका कनीनिका यस्येति तद्विशेषणयोजना । 'सौम्यो बुधे मनोज्ञे स्यादनुग्रे सोमदैवते' इति विश्वः । **उपमालंकारः** ॥ ६९ ॥

विशोधिताद्विष्णुपदात्क्षरन्ती
विष्वङ्मुखी सागरवृद्धिहेतोः ।

**तमोमयीं सूर्यसुतां निगीर्य**
**ज्योत्स्नानदी शोणमपि व्यमुञ्चत् ॥ ७० ॥**

**विशोधितादिति** । विशोधितात् तमोनिरसनेन संमृष्टात् । विष्णुपदात् आकाशात् । सागरवृद्धेरेव हेतोः वृद्ध्यर्थमित्यर्थः । 'षष्ठी हेतुप्रयोगे' इति षष्ठी । विष्वङ्मुखी सर्वतोमुखी । क्षरन्ती । ज्योत्स्नैव नदी गङ्गा । तमोमयीं अन्धकाररूपाम् । सूर्यसुतां यमुनाम् । निगीर्य ग्रसित्वा । शोणं उदयरागमपि । अमुञ्चत् । गङ्गापि शोधितात् चतुर्मुखेन क्षालितात् विष्णोश्चरणात्सागरपूरणार्थं विष्वङ्मुखी मेरो. उपरि स्थितस्य ब्रह्मपुरस्य चतसृषु दिक्षु गङ्गा सिता अलकनन्दा चक्षुर्भद्रेति चतुर्धा विभिद्य सर्वतोमुखतया क्षरन्ती सती यमुनासगमनानन्तर तामुत्तरत्र ग्रस्तामिव कृत्वा स्वय प्राधान्येन प्रवहन्ती तदनन्तर शोणनदेन सयुज्य तमपि समुद्रसमीपे विसृज्य गच्छतीति स्थितिः । विष्णुपदादिति श्लेषेण तमोमयीं सूर्यसुतामित्यपह्नुत्या च सकीर्णो **रूपकालङ्कारः** ॥ ७० ॥

**प्रियामुखैस्तोयमधु प्रदिष्टं**
**पीत्वा नवं प्रीत इवाम्बुराशिः ।**
**समेत्य चन्द्रद्युतिनर्तकीभि-**
**स्तरङ्गितं ताण्डवमाततान ॥ ७१ ॥**

**प्रियेति** । अम्बुराशिः । प्रियामुखैः नदीस्रोतोभिः । 'मुखं निःसरणे वक्त्रे' इति विश्वः । प्रदिष्टं दत्तम् । नवम् । तोयमेव मधु मद्यम् । पीत्वा । प्रीत इव । चन्द्रद्युतिभिरेव नर्तकीभिः । समेत्य । तरङ्गितं संजाततरङ्गं प्रवृद्धम् । ताण्डवं उद्धतं नटनम् । आततान विस्तारयामास । अत्र नदीषु प्रियात्वाध्यवसायरूपातिशयोक्तिः । मुखशब्दश्लेषेण स्रोतसां वक्त्राभे-

दाध्यवसायरूपातिशयोक्तिः । 'तोयमधु' 'चन्द्रद्युतिनर्तकीभिः' इति रूपकाभ्यामम्बुराशिरिति शृङ्गारनायकत्वरूपण गम्यत इत्येकदेशवर्ति **रूपकम्**। पीत्वेति नदीजलप्रदेशे समुद्रकर्तृकपानत्वाध्यवसायरूपातिशयोक्तिः। प्रीत इवेति **काव्यलिङ्गं हेतूत्प्रेक्षा च**। ताण्डवमिति सक्षोभे ताण्डवताध्यवसायरूपातिशयोक्तिश्चेति **सङ्करः** ॥ ७१ ॥

**कलङ्कचित्रीकृतमिन्दुखण्डं**
**तमःसमध्यासितसत्त्वकल्पम् ।**
**अशुष्कशैवालमिवावभासे**
**सिद्धापगासैकतमर्धदृश्यम् ॥ ७२ ॥**

**कलङ्केति**। कलङ्केन चित्रीकृत पूर्व कलङ्कस्योदयरागाभिभूतत्वादचित्र तदपगमे स्फुटेन तेन चित्रीकृतम्। अभूततद्भावे च्विप्रत्ययः। अत एव, तमःसमध्यासितसत्त्वकल्प सत्त्वतमसोः सितासितरूपत्वात्तमोगुणाधिष्ठितसत्त्वगुणतुल्यमित्यर्थः। ईषदसमाप्तौ विहितः कल्पप्प्रत्ययः सादृश्यपर्यवसायी। 'कल्पब्देशीयदेश्यादिः प्रत्ययप्रतिनिधी अपि।' इत्युपमावाचकेषु दण्डिना पठितत्वात्। केचित्तु निभसकाशादिवदुत्तरपदत्वनियतमुपमावाचक कल्पप्रातिपदिकमप्यस्तीत्याहुः। एव भूतम्, इन्दुखण्डं अष्टमीन्दुशकल कर्तृ, । अशुष्क शैवाल यस्मिंस्तत्। अर्धे अर्धभागे दृश्यम्। सिद्धापगासैकत आकाशगङ्गापुलिनमिव। आबभासे इत्युत्प्रेक्षा। तमःसमाध्यासितेत्यादि **उपमा** चेति **संसृष्टिः** ॥ ७२ ॥

**स्वमध्यसंपन्नविशुद्धधामा**
**श्यामा च सा देवकनन्दनी च ।**

तमोमयीं सूर्यसुतां निगीर्य
ज्योत्स्नानदी शोणमपि व्यमुञ्चत् ॥ ७० ॥

**विशोधितादिति**। विशोधितात् तमोनिरसनेन समृष्टात्। विष्णुपदात् आकाशात्। सागरवृद्धेरेव हेतोः वृद्ध्यर्थमित्यर्थः। 'षष्ठी हेतुप्रयोगे' इति षष्ठी। विष्वङ्मुखी सर्वतोमुखी। क्षरन्ती। ज्योत्स्नैव नदी गङ्गा। तमोमयीं अन्धकाररूपाम्। सूर्यसुतां यमुनाम्। निगीर्य ग्रसित्वा। शोणं उदयरागमपि। अमुञ्चत्। गङ्गापि शोधितात् चतुर्मुखेन क्षालितात् विष्णोश्चरणात्सागरपूरणार्थं विष्वङ्मुखी मेरोः उपरि स्थितस्य ब्रह्मपुरस्य चतसृषु दिक्षु गङ्गा सिता अलकनन्दा चक्षुर्भद्रेति चतुर्धा विभिद्य सर्वतोमुखतया क्षरन्ती सती यमुनासंगमनानन्तरं तामुत्तरत्र ग्रस्तामिव कृत्वा स्वयं प्राधान्येन प्रवहन्ती तदनन्तरं शोणनदेन संयुज्य तमपि समुद्रसमीपे विसृज्य गच्छतीति स्थितिः। विष्णुपदादिति श्लेषेण तमोमयीं सूर्यसुतामित्यपह्नुत्या च संकीर्णो **रूपकालङ्कारः** ॥ ७० ॥

प्रियामुखैस्तोयमधु प्रदिष्टं
पीत्वा नवं प्रीत इवाम्बुराशिः ।
समेत्य चन्द्रद्युतिनर्तकीभि-
स्तरङ्गितं ताण्डवमाततान ॥ ७१ ॥

**प्रियेति**। अम्बुराशिः। प्रियामुखैः नदीस्रोतोभिः। 'मुखं निःसरणे वक्त्रे' इति विश्वः। प्रदिष्टं दत्तम्। नवम्। तोयमेव मधु मद्यम्। पीत्वा। प्रीत इव। चन्द्रद्युतिभिरेव नर्तकीभिः। समेत्य। तरङ्गितं संजाततरङ्गं प्रवृद्धम्। ताण्डवं उद्धतं नटनम्। आततान विस्तारयामास। अत्र नदीषु प्रियात्वाध्यवसायरूपातिशयोक्तिः। मुखशब्दश्लेषेण स्रोतसां वक्त्राभे-

दाध्यवसायरूपातिशयोक्तिः । 'तोयमधु' 'चन्द्रद्युतिनर्तकीभिः' इति रूपकाभ्यामम्बुराशिरिति शृङ्गारनायकत्वरूपणं गम्यत इत्येकदेशवर्ति **रूपकम्**। पीत्वेति नदीजलप्रदेशे समुद्रकर्तृकपानत्वाध्यवसायरूपातिशयोक्तिः। प्रीत इवेति **काव्यलिङ्गं हेतूत्प्रेक्षा च**। ताण्डवमिति सक्षोभे ताण्डवताध्यवसायरूपातिशयोक्तिश्चेति **सङ्करः** ॥ ७१ ॥

**कलङ्कचित्रीकृतमिन्दुखण्डं**
**तमःसमध्यासितसत्त्वकल्पम् ।**
**अशुष्कशैवालमिवावभासे**
**सिद्धापगासैकतमर्धदृश्यम् ॥ ७२ ॥**

**कलङ्केति**। कलङ्केन चित्रीकृत पूर्वं कलङ्कस्योदयरागाभिभूतत्वादचित्र तदपगमे स्फुटन तेन चित्रीकृतम्। अभूततद्भावे च्विप्रत्ययः। अत एव, तमःसमध्यासितसत्त्वकल्प सत्त्वतमसोः सितासितरूपत्वात्तमोगुणाधिष्ठितसत्त्वगुणतुल्यमित्यर्थः। ईषदसमाप्तौ विहितः कल्पप्प्रत्ययः सादृश्यपर्यवसायी। 'कल्पब्देशीयदेश्यादिः प्रख्यप्रतिनिधी अपि।' इत्युपमावाचकेषु दण्डिना पठितत्वात्। केचित्तु निभसकाशादिवदुत्तरपदत्वनियतमुपमावाचक कल्पप्रातिपदिकमप्यस्तीत्याहुः। एव भूतम्, इन्दुखण्ड अष्टमीन्दुशकलं कर्तृ, । अशुष्क शैवाल यस्मिस्तत्। अर्धे अर्धभागे दृश्यम्। सिद्धापगासैकत आकाशगङ्गापुलिनामिव। आवभासे **इत्युत्प्रेक्षा**। तमःसमाध्यासितेत्यादि **उपमा** चेति **संसृष्टिः** ॥ ७२ ॥

**स्वमध्यसंपन्नविशुद्धधामा**
**श्यामा च सा देवकनन्दनी च।**

तमः क्षिपन्त्यौ जगतां त्रयाणा-
मन्योन्यसंवादमिवान्वभूताम् ॥ ७३ ॥

**स्वमध्येति**। स्वस्मिन् आत्मीये मध्ये अर्धरात्रे सपन्न विशुद्ध शुभ्र धाम चन्द्रज्योतिः यस्यां सा। देवकीपक्षे स्वमध्ये स्वावलम्बे सपन्न निखिलहेयगुणरहितं परं ज्योतिर्यस्याः सा। श्यामा निशा। सा। देवकस्य नन्दनी देवकी च। त्रयाणाम्। जगताम्। तम अन्धकार शोक च। क्षिपन्त्यौ निरस्यन्त्यौ उभे। अन्योन्यसवाद परस्परसादृश्यम्। अन्वभूतामिव। अत्र स्वमध्येत्यादिश्लेषानुप्राणित. प्रस्तुतयोः श्यामादेवक्योः सवादानुभवलक्षणैकक्रियान्वयरूपस्**तुल्ययोगितालङ्कारः**। स च क्रियान्वयः सभाव्यमान इत्**युत्प्रेक्षेत्येषां सङ्करः**। नन्वत्र स्वमध्यसपन्नविशुद्धधामत्वादिगुणसाधारण्येन वस्तु सदेव श्यामादेवक्योः सादृश्यम्। अत किमत्रोत्प्रेक्ष्यते। उच्यते। स्वमध्येत्यादिशब्दसाधारण्येऽपि पक्षद्वयेऽपि तस्य भिन्नार्थपर्यवसानान्नात्र साधारणधर्मोऽस्तीत्यसदेव सादृश्यम्। धर्मवाचकश्लेषमात्रेणोत्प्रेक्ष्यत इति युक्तम्। नन्वेव 'सकलकलं पुरमेतज्जात संप्रति सुधांशुबिम्बमिव' इत्यादौ वास्तवसादृश्याभावादुपमा न स्यात्। सत्यम्। तथापि तत्र श्लेषभित्तिकाभेदाध्यवसायरूपातिशयोक्तिकल्पितेन धर्मसाधारण्येन कविप्रौढोक्तिनिष्पादित सादृश्यमादायोपमानिर्देशः। इह तु तादृश सादृश्य निश्चयेनानिष्पाद्य सभाव्यत इति विशेषः। नन्दनीति नन्दधातोः करणार्थे ल्युट्। न तु नन्द्यादिल्युः। तथा सति टित्त्वनिमित्ताभावेन ङीबनुपपत्तेः। न च सरूपत्वाल्ल्युटो बाधः शङ्कनीयः। कर्त्रर्थेन करणार्थस्य भिन्नविषयस्य बाधप्रसक्त्यभावात् ॥ ७३ ॥

शाखावकाशेषु कृतप्रवेशै-
श्चन्द्रातपैराश्रितचारकृत्यैः ।
हतावशिष्टानि तमांसि हन्तुं
स्थानं तदाक्रान्तममृग्यतेव ॥ ७४ ॥

**शाखेति** । शाखानां अवकाशेषु रन्ध्रेषु । कृतप्रवेशैः । चन्द्रातपैः चन्द्रस्य प्रकाशैः । आश्रितचारकृत्यैः सद्भिः । हतावशिष्टानि चन्द्रेण हतानां तमसामवशिष्टानि । तमांसि । हन्तुं । तैः अवशिष्टतमोभिराक्रान्तम् । स्थानं तरुषण्डमूलरूपम् । अमृग्यतेव मार्गितमिवेति **स्वरूपोत्प्रेक्षा** । हन्तुमिति **फलोत्प्रेक्षा** चेति **सङ्करः** । 'प्रकाशो द्योत . आतपः' इत्यमरः ॥ ७४ ॥

पराकृतध्वान्तनिकायपङ्कैः
पर्याप्ततारागणफेनपुञ्जैः
अशोभत द्यौरसमायुधस्य
यशःप्रवाहैरिव चन्द्रपादैः ॥ ७५ ॥

**पराकृतेति** । द्यौः अन्तरिक्षम् । पराकृतध्वान्तनिकायपङ्कैः निरस्ततमःसमूहकर्दमैः । पर्याप्ततारागणफेनपुञ्जैः परिपूर्णनक्षत्रगणडिण्डीरनिवहैः । चन्द्रस्य पादैः किरणैः । असमायुधस्य अयुग्मायुधस्य पञ्चशरस्य । यशःप्रवाहैरिव । अशोभत । **रूपकसंकीर्णोत्प्रेक्षालंकारः** ॥ ७५ ॥

ददानया दिक्सरितां प्रसादं
प्रसक्तहसागमया स्वकान्त्या।

**अपाकृतध्वान्तघनप्रवृत्त्या**
**शरत्त्विषा चन्द्रिकया चकाशे ॥ ७६ ॥**

**ददानयेति** । दिशां सरितामिव । प्रसादं नैर्मल्यम् । ददानया । स्वकान्त्या स्वशोभया, प्रसक्तहंसागमया हंसागमनशङ्कावहस्वशोभयेति यावत् । शरत्पक्षे स्वशोभादर्शनेन सजातहसागमनयेत्यर्थः । अपाकृता ध्वान्तानां घनानां मेघानामिव प्रवृत्तिर्यया तया । अत एव शरत्त्विषा शरत्प्रभासमानप्रभया शरत्तुल्ययेति यावत् । चन्द्रिकया । चकाशे । भावे लिट् । **उपमालंकारः** ॥ ७६ ॥

**कलावता कामविहारनाट्ये**
**कालोचितं कल्पयतेव नर्म ।**
**अमोघमायापलितंकरण्यः**
**प्रायो दिशां दीधितयः प्रयुक्ताः ॥ ७७ ॥**

**कलावतेति** । कलावता चन्द्रेणैव नाट्यशिल्पवता सूत्रधारेण । 'काले शिल्पे वित्तवृद्धौ चन्द्रांशे कलने कला' इति यादवः । कामविहारे यूनां मन्मथविहार एव नाट्ये । कालोचित नर्म समयोचित हास्यरसम् । कल्पयता संपादयतेव । दिशाम् । अमोघमायापलितकरण्यः पलितं जरसा शौक्ल्यं तद्वन्तोऽपि पलिताः । 'सुखं दुःखं मल छिद्र कीलास सिध्म लालसः । रभसः पलितं चित्र तद्वति त्रिषु धर्मिणि ।' इति यादवेन धर्मिण्यप्यनुशासनात् । मायया पलिताः मिथ्यापलिताः अमायापलिता मायापलिताः क्रियन्ते आभिरिति मायापलितंकरण्यः । 'आढ्यसुभगस्थूलपलित—' इत्यादिसूत्रेण उपपदविधौ आढ्यादिग्रहणं तदन्ताविधिं प्रयोज-

यतीति मायापलितोपपदादभूततद्भावे करणार्थे ख्युन्प्रत्ययः। 'खित्यनव्ययस्य' इति ह्रस्वः। 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः। 'टिड्ढाणञ्—' इत्यादिना ङीप्। अमोघा अवितथारम्भाश्च ताः मायापलितकरण्यश्चेति समासः। दीधितयो मरीचयः। प्रायो बाहुल्येन भृशं प्रयुक्ताः। अत्र कल्पयतेति हेतौ शतृप्रत्ययः। ततश्चार्जयन्वसतीत्यत्रार्जनवत्फलत्वैवोद्देश्यतया हास्यरसं कल्पयितुमिवेति पर्यवसितोऽर्थः। अतः **फलोत्प्रेक्षा।** हास्यरसकल्पयितृतादात्म्यसभावनेति **स्वरूपोत्प्रेक्षा** वा। सा च कामविहारनाट्य इति रूपकेण कलावतेति तदुत्थापितश्लेषेण दिशां चन्द्रकिरणधावल्यावकुण्ठनस्य मायापलिततादात्म्यतया निगीर्याध्यवसानरूपा**निशयोक्त्या चोत्थापितेति संकरः** ॥ ७७ ॥

**कदम्बमालाभिरधीतलास्यः**
**कल्याणसंभूतिरभूत्प्रजानाम् ।**
**प्रियोदयस्फीतरुचो रजन्याः**
**संतोषनिःश्वासनिभः समीरः ॥ ७८ ॥**

**कदम्बेति**। कदम्बमालाभिः नीपराजिभिः। अधीत लास्य यस्मात्तथोक्तः तासां कम्पयितेत्यर्थः। एतेन मान्द्यसौरभे दर्शिते। शैत्यं तु चन्द्रिकासंपर्कात्सिद्धम्। प्रजानां जनानाम्। कल्याणसंभूतिः आनन्दोदयः। तद्धेतुत्वात्तद्व्यपदेशः। प्रियस्य चन्द्रस्य उदयेन स्फीतरुचः सर्वत्र चन्द्रिकाप्रसरणात्प्रवृद्धकान्तेः। रजन्याः रात्रेः। संतोषनिःश्वास इव स्थितः। समीरो वायुः। अभूत्। यथा पत्युरभ्युदयं दृष्ट्वा प्रवृद्धमुखकान्तेः प्रियायाः संतोषनिःश्वासो भवति तद्वदिति भावः। अत्र अधीतलास्य इति कम्पनस्य निगीर्याध्यवसानाद**तिशयोक्तिः**। कल्याणसभूतिरिति **रूपकम्**। तयो-

रुत्तरार्धगतालंकारैः परस्पर **संसृष्टिः**। उत्तरार्धे चन्द्रस्य प्रियत्वेन निगीर्याध्यवसानादतिशयोक्तिः। रजन्या विशेषणसाम्यान्नायिकात्वप्रतीतेः **समासोक्तिः**। सतोषनि श्वासनिभ **इत्युत्प्रेक्षा** च। एतेषां परस्परानुप्राणितत्वेन **सङ्करः**। यद्यपि निभशब्द उपमाया एव वाचकः, तथापि रजन्या निःश्वाससभावनायां निमित्तोपन्यासाद्रजनीनिःश्वासतादात्म्येनोत्प्रेक्षेति निभशब्दस्य तत्रैव पर्यवसानादु**पमोपक्रमोत्प्रेक्षेयम्** ॥ ७८ ॥

**प्रायेण हंसैरवधूतसङ्गा**
**चारुस्मिता संभृतभृङ्गनादा ।**
**सर्वोपभोग्ये समये प्रसुप्तं**
**कुमुद्वती कोकनदं जहास ॥ ७९ ॥**

**प्रायेणेति**। हंसैः मरालैः। अवधूतसङ्गा त्यक्तसङ्गा। हंसाः कमलिन्यामेव रज्यन्ति न तु कुमुद्वत्यामिति भावः। चारुस्मिता रम्यविकासा। संभृतभृङ्गनादा संपादितभ्रमरस्वना। कुमुद्वती। सर्वेषां उपभोग्ये उपभोगार्हे। समये निशीथे। प्रसुप्तं निमीलितम्। कोकनद अरविन्दं। प्रायेण जहासेवेति दीधितिधावल्य हासत्वेनोत्प्रेक्ष्यते। अत्र रामासोक्त्या वेश्यासाम्य कुमुद्वत्यां प्रतीयते। यथा हंसैर्योगिभिर्वीतरागैरवधूतसङ्गा चारुमन्दहासा स्वकीयोपहाससमये संभृतसहोपहासिविटशब्दा वेश्या सर्वोपभोग्ये समये वनितारसानभिज्ञतया प्रसुप्त जनमुपहसति तद्वदिति। 'अलिचातकयोर्भृङ्गः षिद्गधूम्याटयोरपि।' इति रत्नमाला। 'हंसो विहगभेदे स्यादर्के विष्णौ हयान्तरे। योगिमन्त्रात्मभेदेषु परमात्मनि मत्सरे॥' इति विश्वः ॥ ७९ ॥

**कलङ्कलक्षेण समक्षि काचित्**
**कस्तूरिकापत्रविशेषकान्तिः ।**

सुधांशुबिम्बव्यपदेशदृश्यें
मुग्धे रजन्या मुखपुण्डरीके ॥ ८० ॥

**कलङ्केति** । सुधांशुबिम्बव्यपदेशदृश्ये चन्द्रमण्डलव्याजेन दृष्टिगोचरे । **मुग्धे सुन्दरे** । रजन्याः । मुख पुण्डरीकमिव तस्मिन् । कलङ्कलक्षेण अङ्कव्याजेन । काचित् । कस्तूरिकायाः पत्रविशेषस्य कस्तूरिकारचितचित्रकविशेषस्य कान्तिः शोभा । समैक्षि अदर्शि । इह अष्टम्यां पूर्णचन्द्रो वर्णित इति न विरोधः शङ्कार्हः । काव्यस्य वर्णनामात्रपरत्वेन तदनादरणात् । अत एव माघकाव्ये रात्रिवर्णने प्रथमं महान्तमन्धकार वर्णयित्वा ततः पूर्णचन्द्रोदयो वर्णितः । ततः प्रभाते 'हुतमयमवलीढ साधु सांनाय्यमग्निः' इति दर्शेष्टिरपि वर्णिता । यद्वा, अत्र बिम्बशब्दो मूर्तिमात्रपरो मन्तव्यः । तथा च मध्यमादिभागरूपे मुखैकदेशे योज्यम् । एवम् 'समीपतः सतरसाम्बुराशेः' इति श्लोके बिम्बग्रहणस्याविरोधोऽनुसधेयः । सुधांशुबिम्बव्यपदेशेत्यत्रापह्नुतिः । कलङ्कलक्षेणेत्यत्राप्यपह्नुतिः । रजन्या विशेषणसाम्यान्नायिकात्वप्रतीतेः **समासोक्तिः** । तिसृणां परस्परानुप्राणितत्वेन **सङ्करः** । मुखपुण्डरीक इत्युपमा**याः संसृष्टिः** ॥ ८० ॥

तलेष्ववेपन्त महीरुहाणां
छायास्तदा मारुतकम्पितानाम् ।
शशाङ्कसिंहेन तमोगजानां
लूनाकृतीनामिव गात्रखण्डाः ॥ ८१ ॥

**तलेष्विति** । तदा । मारुतेन कम्पितानाम् । महीरुहाणाम् । तलेषु

अधःप्रदेशेषु । छायाः । शशाङ्केनैव सिंहेन । लूनाकृतीनां कृत्तगात्राणाम् । तमसामेव गजानां कुञ्जराणाम् । गात्रखण्डा इव । अवेपन्त अकम्पन्त । सद्यःकृत्ता गात्रखण्डाः क्षण कम्पन्ते । **रूपकसंकीर्णोत्प्रेक्षालङ्कारः** ॥ ८१ ॥

तमस्तरङ्गानवसादयन्त्या
समेयुषी चन्द्रिकया महत्या ।
सुरस्रवन्त्येव कलिन्दकन्या
श्यामा बभौ सान्द्रनवोत्पलश्रीः ॥ ८२ ॥

**तम इति** । तमांसि तरङ्गा इव तान् । अवसादयन्त्या अभिभवन्त्या । चन्द्रिकया । समेयुषी सगता । सान्द्रनवोत्पलश्रीः निबिडनवकुवलयशोभा । श्यामा रात्रिः । महत्या । अत एव स्वकीयतरङ्गानभिभवन्त्या । सुरस्रवन्त्या गङ्गया । समेयुषी । नवेन्दीवरश्यामा । कलिन्दकन्या यमुनेव । बभौ । **उपमालंकारः** । अत्रेन्दीवराणां रात्रौ निमीलनस्य वर्णितत्वात्तदविरोधायोत्पलशब्दः उपमेयविशेषणत्वे कैरवपरो द्रष्टव्यः । 'स्यादुत्पलं कुवलयमथ नीलाम्बुजन्म च । इन्दीवरं च नीलेऽस्मिन्सिते कुमुदकैरवे ॥' इत्यमरसिंहेन कुमुदेन्दीवरसाधारणतयानुशिष्टस्य तस्याभिमतविशेषे पर्यवसानात् । यद्वा, इन्दीवरपरत्वेऽपि न विरोधः । रात्रौ तेषां विकासस्यापि कविसमयप्रसिद्धेः प्रागुक्ततया कविसमयद्वैविध्यख्यापनाय द्वेधापि वर्णनोपपत्तेः ॥ ८२ ॥

स्वविप्रयोगव्यसनाभिपीतं
भृङ्गापदेशेन कुमुद्वतीभिः ।

सुधाभिराप्लाव्य करस्थिताभिः
प्रच्यावयामास विषं सुधांशुः ॥ ८३ ॥

**स्वविप्रयोगेति** । सुधांशु । कुमुद्वतीभिः । स्वविप्रयोगव्यसनात् स्वविश्लेषदुःखात् । भृङ्गापदेशेन भ्रमरव्याजेन । निपीतम् । विषम् । करे किरणे एव हस्ते स्थिताभि । सुधाभि. आप्लाव्य कुमुद्वतीरासिच्य । प्रच्यावयामास । अत्र विशेषणसाम्यात्कुमुदिनीनां चन्द्रस्य च दंपतिभावप्रतीतेः **समासोक्तिः** । स्वविप्रयोगव्यसनादिति विषपाने **हेतूत्प्रेक्षा** । निपीतमिति मुकुलीभावसमये भृङ्गाणामन्तःप्रवेशस्य निगीर्याध्यवसानादति**शयोक्तिः** । भृङ्गापदेशेनेत्यपह्नुतिः । करस्थिताभिरिति **श्लेषश्चे**ति **संकरः** ॥

चकाशिरे पत्रकलासमृद्ध्या
व्योमोपमे वारिणि कैरवाणि ।
कलङ्कदृश्यभ्रमराणि काले
स्वनाथसाधर्म्यमुपागतानि ॥ ८४ ॥

**चकाशिर इति** । व्योमोपमे गगनसदृशे । वारिणि । पत्राणि दलानि कलाः इव तासां समृद्ध्या, उपलक्षितानि । कलङ्क इव दृश्यः कान्तः भ्रमरो येषु तानि । कैरवाणि । काले निशासमये । स्वनाथेन व्योमनि कलासमृद्धिमता कलङ्कचित्रितेन च चन्द्रेण साधर्म्यं सादृश्यम् । उपागतानीव । प्राप्तानीव चकाशिरे । **उपमासंकीर्णोत्प्रेक्षालंकारः** । अत्रापि स्वमध्यसपन्नेत्यादिश्लोक इव उपमाने व्योम्नि कलाकलङ्काः, उपमेये वारिणि पत्रभ्रमराः इति भेदादुभयसाधारणधर्माभावेन मुख्यसादृश्याभावात्पत्रकलादिधर्मसादृश्येन निमित्तेन धर्मिसादृश्यमुत्प्रेक्ष्यत इत्युत्प्रेक्षोपपत्तिरनुसंधेया ॥ ८४ ॥

सरिन्मुखैस्तोयमधुप्रदिष्टं
पीत्वा नवं प्रीत इवाम्बुराशिः ।
चकार चन्द्रप्रतिबिम्बितानां
करग्रहैः कामपि रासलीलाम् ॥ ८५ ॥

**सरिदिति** । प्रियामुखैरिति श्लोकेन व्याख्यातोऽयं श्लोकः । उत्तरार्धे कियानपि विशेषः । चन्द्रस्य प्रतिबिम्बितानां प्रतिच्छायानाम् । करग्रहैः किरणानामेव हस्तानां ग्रहणैः । कामपि आश्चर्यभूताम् । रासलीलां उभयतो वनिताकरग्रहसाध्यमण्डलनृत्तविशेषरूपां लीलाम् । चकार । 'प्रतिमान प्रतिबिम्ब प्रतिमा प्रतियातना प्रतिच्छाया' इत्यमरः । अत्राम्बुराशेः सरिद्भिः सह नायकनायिकाभावव्यवहारप्रतीतेः **समासोक्तिरेका** । चन्द्रप्रतियातनाभिः सह तत्प्रतीतिरन्या । करग्रहैरिति श्लेषानुप्राणिता समुद्रक्षोभे रासनृत्तत्वाध्यवसायरूपा**तिशयोक्तिश्च** । मुखशब्दश्लेषमूला-भेदाध्यवसायरूपातिशयोक्तिश्च पूर्ववत् । स्पष्टमन्यत् ॥ ८५ ॥

प्रसादभाजोरुभयोरभूता-
मुभावनिर्धार्यमिथोविशेषौ ।
नभःस्थले शीतरुचिः सतारे
सकैरवे तत्प्रतिमा च तोये ॥ ८६ ॥

**प्रसादेति** । प्रसादं वैमल्यं भजमानयोः । उभयोः अधिकरणयोः । उभौ । अनिर्धार्यमिथोविशेषौ अनिर्धारणीयपरस्परभेदौ । अभूताम् । **कयो-रुभयोः** कावुभौ, तत्राह— **नभ इति** । सतारे नक्षत्रसहिते । नभःस्थले । शीतरुचिः । सकैरवे । तोये । तत्प्रतिमा तस्य प्रतिबिम्बश्च । अत्र **विशेष-**

निर्धारणाशक्तिरूपक्रियान्वयात् **तुल्ययोगितालङ्कारः** । तेन नभस्तोययोरन्योन्यसादृश्यरूपोपमेयोपमा व्यज्यते । तथा च तयोः सादृश्यान्तरव्यावृत्तिर्द्योत्यते ॥ ८६ ॥

**नभस्तुषारांशुमयूखयोगात्**
**तमिस्रया मोक्षमविद्ययेव ।**
**अतृष्यतस्तत्त्वविदो निशाया-**
**मन्तर्मुखं चित्तमिवान्वविन्दत् ॥ ८७ ॥**

**नभ इति** । नभः । तुषारांशुमयूखयोगात् चन्द्रकिरणसंपर्कात् । तमिस्रया अन्धकारेण । अविद्यया अज्ञानेनेव । मोक्षं । अन्वविन्दत् अलभत । अतृष्यतः तृष्णारहितस्य । तत्त्वविदः तत्त्वज्ञस्य । निशायां रात्रौ । अन्तर्मुखं बहिर्व्यासङ्गहेत्वभावात्प्रत्यगभिमुखम् । चित्तमिव । तद्यथात्मयोगाद्योगाभ्यासात् अविद्यया मुच्यते तद्वदित्यर्थः । विरक्तस्य तत्त्वविदोऽपि चित्तं निशायां यदा ध्यानाभिमुखं प्रसीदति तथेति भावः । अनेकेवोपमालङ्कारः ॥ ८७ ॥

**सहोदिता चन्द्रमसा बभासे**
**ज्योत्स्ना पयोधेरुपजातरागा ।**
**तदातने संजननेऽपि शौरेः**
**सहायिनी सागरसंभवेव ॥ ८८ ॥**

**सहोदितेति** । चन्द्रमसा सह । पयोधेः समुद्रात् । उदिता । उपजातरागा सजातोदयरागा । ज्योत्स्ना । तदातने सजननेऽपि तत्कालीनावतारेऽपि । शौरेः । सहायिनी सहायभूता । सागरसंभवा लक्ष्मीरिव

बभासे । लक्ष्मीरपि समुद्रादुदिता भवति संजातानुरागा च । तस्याश्च 'राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि । अन्येषु चावतारेषु विष्णोरेषानपायिनी ।' इति भगवदवतारेषु सहावतरणंप्रसिद्धमिति अत्र ज्योत्स्नायास्तत्तादात्म्येनोत्प्रेक्षणात्**स्वरूपोत्प्रेक्षालङ्कारः** । सहोपपदादयतेस्ताच्छीलिके णिनि प्रत्यये सहायिनीशब्दः ॥ ८८ ॥

**प्रबुद्धताराकुमुदाब्धिचन्द्रे**
**निःशेषनिद्राणजने निशीथे ।**
**स तादृशो देवपतेः प्रसूतिं**
**पुष्यन्बभौ पुण्यतमो मुहूर्तः ॥ ८९ ॥**

**प्रबुद्धेति** । प्रबुद्धताराकुमुदाब्धिचन्द्रे ताराणां चन्द्रस्य च प्रबोधो दीप्यमानता कुमुदानां विकासः अब्धीनां सक्षोभः यस्मिन् । निद्राणनिःशेषजने सुप्ताखिलजने निशीथे अर्धरात्रे । सः । तादृशः । देवपतेः कृष्णस्य । प्रसूतिं अवतारम् । पुष्यन् संपादयन् । पुण्यतमः व्रतपराणां परमश्रेयोहेतुत्वादतिशयेन पुण्यः । मुहूर्तः कियान्कालः । बभौ । 'मुहूर्तः स्वल्पकाले स्याद्घटिकाद्वितयेऽपि च' इति शब्दार्णवः । निपूर्वाद्द्रातेः 'संयोगादेरातो धातोः—' इति निष्ठानत्वे 'रषाभ्यां—' इति णत्वे च निद्राणशब्दः । स इति तत्कालस्य पुराणादिषु स्वरूपप्रसिद्धिं द्योतयति । तादृश इति 'यद्बाल्ये यच्च कौमारे स्थाविरे यच्च पातकम् । तत्क्षालयति गोविन्दस्तिथौ तस्यां विभावितः ।' इति पापहन्तृत्वप्रमुखप्रकारप्रसिद्धिं द्योतयतीति न पौनरुक्त्यम् ॥ ८९ ॥

**भागेन पूर्वेण तमोमयेन**
**प्रकाशपूर्णेन च पश्चिमेन ।**

**तदा निशीथः स सतां प्रसत्त्यै**
**ससारमुक्त्योरिव सन्धिरासीत् ॥ ९० ॥**

**भागेनेति** । तदा तस्मिन्भगवदवतारसमये । तमोमयेन अन्धकारप्रचुरेण । पूर्वेण भागेन पूर्वरात्रेण । प्रकाशपूर्णेन चन्द्रालोकपूर्णेन । पश्चिमेन भागेन अपररात्रेण च, उपलक्षितः । सः निशीथः । ससारमुक्त्योः । सन्धिः अन्तरालकाल इव । सतां प्रसत्त्यै आसीत् भगवदवतारसमयत्वात्सज्जनानां हृदयप्रसादायाभवत् । ससारमुक्त्योः सन्धिरपि तमोगुणप्रचुरेण तमोगुणविकारेण वा पूर्वभागेन ससारकालेन प्रकाशपूर्णेन आविर्भूतस्वरूपज्ञानपरिपूर्णेन पश्चिमभागेन मुक्तिकालेन चोपलक्षितः सतां ब्रह्मविदां हृदयप्रसादाय भवतीत्युपमा । 'अस्ति ब्रह्मेति चेद्वेद सन्तमेन ततो विदुः' इति श्रुतेः ब्रह्मविदः सच्छब्दाभिधेयाः ॥ ९० ॥

**प्रागेव जातेन सितेन धाम्ना**
**मध्योपलक्ष्येण च माधवेन ।**
**प्रकामपुण्या वसुदवपत्न्या**
**सम्पन्नसाम्येव निशा बभासे ॥ ९१ ॥**

**प्रागिति** । प्रकामपुण्या अत्यर्थपुण्यकरी । प्रागेव । जातेन । सितेन धाम्ना चन्द्रेण । मध्ये निशीथे आविर्भावदशायामुपलक्ष्येण । माधवेन कृष्णेन च, उपलक्षिता । निशा । वसुदेवपत्न्या । सम्पन्नसाम्या लब्धसादृश्येव । बभासे बभौ । सा च देवकी । प्रकामं पुण्या पुण्यवती । प्रागेव रोहिण्यां जातेन । सितेन धवलेन । धाम्ना बलभद्रेण । मध्ये वलग्ने उपलक्ष्येण माधवेन चोपलक्षिता चेति राज्यास्तत्सादृश्यम् । अत्रापि

8

खमध्यसपत्नेत्यादिश्लोकव्याख्यानोक्तन्यायेन मुख्यसादृश्याभावात्साद्द-श्योत्प्रेक्षा। रात्रिपक्षे पुण्यशब्दात्तत्करोतीति णिचि पचाद्यच्। देवकी-पक्षे तस्मान्मत्वर्थः अर्शआद्यच् ॥ ९१ ॥

सह प्रतिच्छन्दशशाङ्कभेदैः
सरस्वतां ताण्डविनस्तरङ्गाः।
अवेक्ष्य शौरेरवतारवेलां
सन्तोषनिघ्ना इव संप्रणेदुः ॥ ९२ ॥

**सहेति**। सरस्वतां समुद्राणां। तरङ्गाः। शौरेः अवतारवेलां। अवेक्ष्य समीक्ष्य। सन्तोषनिघ्नाः सन्तोषपरवशा इव। प्रतिच्छन्दशशाङ्कभेदैः प्रतिबिम्बचन्द्रविशेषैः सह। ताण्डविनः उद्धतनृत्तवन्तः सन्त.। सप्रणेदुः। समन्तात्प्रकर्षेण नदन्ति स्म। 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम्। अत्र चन्द्रोदयप्रयुक्तसमुद्रक्षोभे ताण्डवत्वेन निगीर्याध्य-वसिते सन्तोषस्य हेतुत्व हेतुगर्भविशेषणविन्यासेनोत्प्रेक्ष्यत इत्यतिशा-योक्त्युत्प्रेक्षाकाव्यलिङ्गसंकरः ॥ ९२ ॥

अवादितोदीरिततूर्यनादं
दिशाभिराम्रेडितदिव्यगीतम्।
सतामुपस्थापितसत्त्वलास्यं
सङ्गीतमाङ्गल्यमभूत्तदानीम् ॥ ९३ ॥

**अवादितेति**। तदानीं भगवदवतरणसमये। अवादितेभ्यः अकृत-वादनेभ्य एव वाद्येभ्यः उदीरितः उद्गतः तूर्यनादः यस्मिंस्तत्तथोक्तम्। दिशाभिः, आम्रेडितदिव्यगीतं अभ्यस्तद्युप्रभवगीतम्। सर्वासु दिक्षु

सञ्चरद्भिर्गन्धर्वादिभिर्बहुशः कृतदिव्यगानमित्यर्थः । सतां साधुजनानाम् । उपस्थापितसत्त्वलास्यं सन्निधापितसत्त्वगुणनर्तनम् । सङ्गीतमाङ्गल्य वाद्यगीतनृत्तत्रिकरूप मङ्गल्यम् । अभूत् । 'गीतं नृत्तं च वाद्यं च त्रयं सङ्गीतमुच्यते ।' इति सङ्गीतरत्नाकरे ॥ ९३ ॥

**प्रदीपितैः कंसगृहेषु दीपै-**
**स्तापैश्च भावेषु तपोधनानाम् ।**
**अलभ्यत क्षिप्रमलब्धभङ्गै-**
**रहेतुनिर्वाणदशानुभूतिः ॥ ९४ ॥**

**प्रदीपितैरिति** । कंसगृहेषु । प्रदीपितैः प्रज्वलितैः । दीपैः । तपोधनानाम् । भावेषु हृदयेषु । प्रदीपितैः असुरादिपीडयोद्दीपितैः । तापैः सतापैश्च । अलब्धभङ्गैः अप्राप्तनिर्वापणादिनाशनव्यापारैरेव । क्षिप्रम् । अहेतुनिर्वाणस्य निर्हेतुकविनष्टस्य दशा नाशः तदनुभूतिः तत्प्राप्तिः । अलभ्यत लब्धा । अत्र दीपतापानां नाशावाप्तिलक्षणैकक्रियान्वयात् **तुल्ययोगितालङ्कारः** । प्रसिद्धविनाशकाभावेऽपि कंसस्य तपोधनानां च भगवदवतारानन्तरभावि शुभाशुभसूचकं दैवं प्रसिद्धं कारण हृदि निधाय विनाशोत्पत्तिर्निबद्धेति **विभावनालङ्कारश्च** ॥ ९४ ॥

**अजः स्वजन्मार्हतयानुमेने**
**यामष्टमीं यादवभावमिच्छन् ।**
**द्वितीयया भावितयोगनिद्रा**
**साभूत्तदानीं प्रथमा तिथीनाम् ॥ ९५ ॥**

**अज इति** । अजो विष्णुः । 'अजा विष्णुहरच्छागाः' इति वैजयन्ती।

यादवभावं यादवत्वम् । इच्छन् । यामष्टमीम् । स्वजन्मार्हतया स्वावतरणो चितत्वेन । अनुमेने अङ्गीचकार । द्वितीयया स्वस्याः द्वितीयया नवम्या । भावितयोगनिद्रा उत्पादितभगवद्योगनिद्रा । सा । तदानीम् । तिथीनाम् । प्रथमा अभूत् भगवदवतारेण मुख्याभूदित्यर्थः । भगवन्मायारूपयोगनिद्रा तत्प्रेरणया तदवतारानन्तर नवम्यां दुर्गारूपेण यशोदायामभूदिति विष्णु-पुराणादिषु कथा । अत्राष्टमी प्रथमा जातेति विरोधः; प्राथम्य मु-ख्यत्व विवक्षितमिति तत्समाधान चेति **विरोधाभासोऽलङ्कारः** । अत्र सर्गे इन्द्रवज्रोपेन्द्रवज्रापादसकररूपोपजातिर्वृत्तम् । क्वचित् 'तामी-दृशीं विश्वपितुः प्रसूतिम्' इत्यादाविन्द्रवज्रा । 'सुवर्णपीताम्बरवासिर्नी सा' इत्यादावुपेन्द्रवज्रापि । तथापि अविदूरविप्रकर्षात्त्रिष्वप्येकवृत्तत्वव्यव-हारः ॥ ९५ ॥

**अथ सितरुचिलग्ने सिद्धपञ्चग्रहोच्चे**
**व्यजनयदनघानां वैजयन्त्यां जयन्त्याम् ।**
**निखिलभुवनपद्मक्लेशनिद्रापनुत्त्यै**
**दिनकरमनपायं देवकीपूर्वसन्ध्या ॥ ९६ ॥**

सर्गान्ते मालिनीवृत्तमाह । **अथेति** । अथ चन्द्रोदयानन्तरम् । अन-घानां अघविरोधिनां पुण्यदिवसानाम् । वैजयन्त्यां पताकायां श्रेष्ठभूतायामि-ति यावत् । जयन्त्यां रोहिणीसहितश्रावणमासकृष्णाष्टम्याम् । सिद्धं संपन्नं पञ्चानां ग्रहाणां शशिकुजबुधगुरुशनैश्चराणां उच्चं तुङ्गस्थानं यस्मि-न्निति तथोक्तम् । चन्द्रादीनामुच्चस्थानानि वृषभमकरकन्याकर्कटतुलाख्या नि । तदुक्तं बृहज्जातके--'अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः' इति । श्रावणमासे रवेः सदा तत्संनिकृष्टस्य शुक्रस्य

च मेषमीनयोः स्वोच्चयोरवस्थानासंभवात्परिशेषाच्चन्द्रादीनां पञ्चानामुच्चस्थानस्थितिर्विवक्षितेत्यवसीयते । 'पञ्चोच्चो लोकनायकः' इति जातकशास्त्रविदस्तत्फलमाहुः । सितरुचिना चन्द्रेण युक्ते लग्ने वृषभलग्ने । मध्यमपदलोपी समासः । देवक्येव पूर्वसध्या प्रातःसन्ध्या । निखिलानि भुवनान्येव पद्मानि तेषां क्लेश एव निद्रा मुकुलीभावः तस्या अपनुत्त्यै निरासाय । अनपायं दिनकर अस्तमयरहितमादित्यमिति श्रीकृष्णे तथाध्यवसायः । व्यजनयत् प्रादुर्भावयति स्मेत्यर्थः । 'जनी प्रादुर्भावे' इति धात्वर्थानुगमात् । 'देवकीपूर्वसध्यायामाविर्भूत महात्मना' इति पुराणवचनाच्च । रूपकातिशयोक्त्योः संकरः ॥ ९६ ॥

अवतरति मुकुन्दे संपदामेककन्दे
सुरभितहरिदन्तां स्वादुमाध्वीकदिग्धाम् ।
अभजत वसुदेवस्थानमानन्दनिघ्नै-
रमरमिथुनहस्तैराहितां पुष्पवृष्टिम् ॥ ९७ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु यादवाभ्युदये महाकाव्ये
श्रीकृष्णावतारवर्णनं नाम

## द्वितीयः सर्गः ॥

**अवतरतीति** । संपदां त्रैलोक्यस्याभिवृद्धीनाम् । एककन्दे अन्यनिरपेक्षकारणे । सस्यमूलवाचकः कन्दशब्दः कारणसामान्ये लाक्षणिकः ।

मुकुन्दे। अवतरति आविर्भवति सति। वसुदेवस्य भवनं गृहम्। आनन्दविषये निघ्नैः अधीनैः आनन्दपरवशैरिति यावत्। अमरमिथुनानां हस्तैः। आहिताम्। सुरभितहरिदन्तां वासिताखिलदिगन्ताम्। स्वादुमाध्वीकदिग्धां मधुरमकरन्दरसरूषिताम्, पुष्पवृष्टिम्। अभजत। अत्र मुकुन्दस्य कन्दत्वरूपणात्तद्भवानां संपदामोषधित्वरूपणं गम्यत इत्येकदेशवर्त्तिरूपकालङ्कारः। मालिनीवृत्तम् ॥ ९७ ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीविश्वजिद्याजि-
श्रीरङ्गराजाध्वरिवरसूनुना अप्पय्यदीक्षितेन
विरचिते यादवाभ्युदयव्याख्याने

द्वितीयः सर्गः ॥

श्रीमते वेदान्तगुरवे नमः।



# तृतीयः सर्गः ।



अथ जगन्ति बभूवुरनाविला-
न्यतिमिरा हरितः प्रचकाशिरे ।
अभजदेव निशा दिवसश्रियं
जननभाजिनि देवदिवाकरे ॥ १ ॥

**अथेति** । सर्गान्तरारम्भार्थोऽथशब्दः । देवे कृष्ण एव दिवाकरे । जननभाजिनि प्रादुर्भावभाजिनि सति । जगन्ति । अनाविलानि प्रसन्नचित्तानि । बभूवुः । हरितो दिशः । अतिमिराः अन्धकाररहिताः । प्रचकाशिरे आवभासिरे । निशा । दिवसश्रियं दिनशोभाम् । अभजदेव प्राप्तैव । तथा प्रकाशभूयस्त्वमभूदिति भावः । दिवाकरेऽभ्युदिते लोकानां निद्रापगमाच्चेतःप्रसादो दिशामन्धकारापगमो निशाया दिवसपरिणामश्च भवतीति **रूपकसङ्कीर्णः** क्रियायौगपद्यरूपः **समुच्चयालङ्कारः** । **द्रुतविलम्बितं** सर्गवृत्तम् । 'द्रुतविलम्बितमाह **नभौ भरौ**' इति लक्षणात् ॥ १ ॥

ननृतुरप्सरसो दिवि नन्दिताः
किमपि गीतमगीयत किन्नरैः ।
श्रुतिसुखैः समतोषयत स्वनै-
रमरदुन्दुभिरानकदुन्दुभिम् ॥ २ ॥

**ननृतुरिति** । अप्सरसः । दिवि । नन्दिताः प्रीतिमत्यः सत्यः । ननृतुः

नृत्यन्ति स्म। किन्नरैः। किमपि अनिर्वचनीयं अतिमधुरम्। गीतम्। अगीयत। अमराणां दुन्दुभिः भेरी। श्रुतिसुखैः श्रोत्रसुखहेतुभिः। 'सुखहेतौ सुखं सुखम्' इति शब्दार्णवः। स्वनैः। आनकदुन्दुभिं वसुदेवम्। समतोषयत सतोषयते स्म। तुष्यतीति तोषः। पचाद्यचि 'तत्करोति' इति णिचि 'णिचश्च' इत्यात्मनेपदम्। 'तुष तुष्टौ' इति धातोरेव हेतुमण्णिजङ्गीकारे तु 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति परस्मैपदं स्यात्॥

**दशसु तत्र दिशास्वशरीरिणी**
**जय जयेति बभूव सरस्वती।**
**अजितमेकमगोचरयत्स्वयं**
**स्वरसवृत्तिरसावसुरान्तकम्॥ ३॥**

**दशस्विति**। तत्र वसुदेवस्थाने। दशसु दिशासु प्रागादयोऽष्टावूर्ध्वमधश्चेति दशसु दिक्षु। जय जयेति। अशरीरिणी। सरस्वती वाणी। बभूव। असौ जय जयेति सरस्वती। असुराणां अन्तकं हन्तारम्। अजितं श्रीकृष्णं एकम्। 'विष्णावप्यजिताव्यक्तौ' इत्यमरः। स्वरसा स्वारस्यवती वृत्तिर्यस्याः सा तथाभूता सती। स्वयं अगोचरयत् स्वयमेव विषयीचकार। द्विषामसुराणां जेतरि स्वयं केनाप्यजिते भगवति अभिधायाः परिपोषलाभात्स्वरसतः प्रवर्तते। अन्यत्र तु स्वार्थसंकोचात्प्रकरणोपपदादिनानूद्यमानः कथंचित्प्रवर्तत इति भावः। जय जयेति समतौ द्विरुक्तिः॥ ३॥

**अनतिवेलसमीरणचोदितैः**
**शिशिरशीकरशीभरिताम्बरैः।**

जलधरैरभितो दिवि दध्वने
सुरगजैरिव सूचितमङ्गलैः ॥ ४ ॥

**अनतिवेलेति** । दिवि अभ्रे । अनतिवेलेन अतीव्रेण समीरणेन चोदितैः प्रेरितैः । शिशिरैः शीतलैः शीकरैः अम्बुकणैः शीभरित स्फारीकृत रमणीयीकृत वा अम्बर आकाश यैः । सूचित मङ्गल जगतः शुभ यैस्तथाभूतै । जलधरैः । सुरगजैः ऐरावतादिभिरिव । दध्वने ध्वनितम् । यथा अभ्रमार्गे अनतिक्रान्तमर्यादप्रवहानिलप्रेरणया सचरन्तः पुष्करोद्भूतशीकराञ्चितगगनाः सुरगजा जगन्मङ्गल सूचयन्तस्तदानी बृंहितरूपध्वनिमकुर्वन्, एव जलधरा अपि गर्जितरूपध्वनिमकुर्वन्नित्यर्थः । 'शीभृ कत्थने' इति धातोरौणादिके अरन्प्रत्यये शीभरशब्दः । 'शीभरः स्फाररम्ययोः' इति नैघण्टुकाः । **समुच्चयोपमालंकारः** ॥ ४ ॥

ववुरथो मरुतस्त्रिदशाङ्गना-
वदनसौरभसारभृतः शुभाः ।
मुदितनिर्जरमुक्तसुरद्रुम-
प्रसववृष्टिमधुद्रवमेदुराः ॥ ५ ॥

**ववुरिति** । अथो अनन्तरम् । त्रिदशाङ्गनानां वदनस्य यः सौरभसारः सौगन्ध्योत्कर्षः तं बिभ्रतीति तथोक्ताः । मुदितैः हृष्टैः निर्जरैः मुक्तानां सुरद्रुमप्रसववृष्टीनां मधुद्रवैः मकरन्दस्यन्दैः मेदुराः सान्द्रस्निग्धाः । शुभाः मङ्गलाः मरुतः । ववुः । 'स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने' इति शब्दार्णवे ॥ ५ ॥

मधुरिपोरवतारमहोत्सवे
मुमुदिरे मथुरापुरदेवताः ।
यदभिगन्तरि भक्तजने वरं
ददुरशेषमतन्द्रितचेतसः ॥ ६ ॥

**मधुरिपोरिति** । मधुरिपोः श्रीकृष्णस्य । अवतार एव महोत्सवे । मथुरापुरस्य देवताः । मुमुदिरे मोदमभजन् । यद्यथा । अभिगन्तरि इष्टार्थमुपसर्पणकर्तरि । भक्तजने । अशेषं वरं समस्तमीप्सितम् । अतन्द्रितं असञ्जाततन्द्रं बहुवारप्रार्थनेऽपि अनुत्पन्नवैरस्यं चेतो यासां तथाभूताः सत्यः । ददुः । तथा मुमुदिर इति मोदाधिक्योक्तिः । अधिकप्रमोदा हि प्रभवः तद्दशायामवसरज्ञैः समाश्रितैः प्रार्थितं बह्वपि प्रयच्छन्ति ॥ ६ ॥

अवदधानधियो मुनयस्तदा
यदनधीतमधीतवदञ्जसा ।
निगमजातमशेषमवेक्ष्यत-
न्निरविशन्निव मुक्तिमयीं दशाम् ॥ ७ ॥

**अवदधानेति** । तदा । अवदधाना अवधानवती धीर्येषां ते । मुनयः । यत् निगमजातम् । अनधीतम् । तदशेषम् । अञ्जसा शीघ्रम् । अधीतवत् अवेक्ष्य अधीतमिव मनसि स्पष्टं प्रकाशमानमवेक्ष्य । मुक्तिमयी मुक्तिरूपाम् । दशां अवस्थाम् । निरविशन्निव अन्वभवन्निव । तथा असुख्यन्निवेत्यर्थः । **उत्प्रेक्षालङ्कारः** ॥ ७ ॥

प्रसदनं शरदागमसंभवं
नभसि मासि नदीभिरुपाददे ।

**महितयोगविदां मतिभिः समं**
**श्रुतिभिरप्यनुपप्लवनीतिभिः ॥ ८ ॥**

**प्रसदनमिति** । नभसि मासि श्रावणे मासे । 'पद्दन्नोमास्—' इत्यादिना मासशब्दस्य मासित्यादेश. । नदीभिः । शरदागमसभव शरत्समयागमप्रभवम् । प्रसदन प्रसादो नैर्मल्यम् । उपाददे उपात्तम् । कर्मणि लिट् । शरत्समय इव प्रावृष्यपि नद्यः प्रसन्ना बभूवुरित्यर्थ । कि च महित उत्कृष्ट योग विदन्तीति तेपा महितयोगविदाम् । मतिभिः बुद्धिभिः । समम् । अनुपप्लवनीतिभिः अनुस्तोपक्रमादिन्यायाभिः । श्रुतिभिरपि । प्रसदनमुपाददे । प्रसदन प्रकृष्टसदन शुभाश्रयः । श्रुतिपक्षे प्रसादो झटित्यर्थसमर्पणक्षमत्वम् । तथा च भगवत्यवतीर्णे स एव योगिध्यानस्य आप्तमालम्बनमासीत् । भुवि भगवदवतारमहिम्ना विदुषां मनःप्रसादाद्वेदानामुपक्रमादिन्यायाविरोधेन झटिति यथावदर्थस्फुरणमप्यासीदित्यर्थः । अत्र नदीना श्रुतीनां च एकक्रियान्वयात् **तुल्ययोगितालङ्कारः** । सहोक्तिबलात्प्रसदन श्रुतिषु मतिषु नदीषु च भिन्नार्थं जातमिति **सहोक्त्यलङ्कारश्च** ॥ ८ ॥

**निखिलचेतनमानसनिःसृताः**
**कलुषताः समुदेत्य किल क्षणात् ।**
**विविशुरम्भ इव स्वयमापगाः**
**जलनिधेरिव भोजपतेर्मनः ॥ ९ ॥**

**निखिलेति** । निखिलानां चेतनानां मानसेभ्यो नि.सृताः । कलुषता. आविलताः । आपगाः किल सरित इवेति किलशब्दो भिन्नक्रमः ।

अपेक्षानुरोधात् । समुदेत्य सभूद । जलनिधेरिव । भोजपतेः कंसस्य । अम्भ इव । मनः । क्षणात् तूर्णम् । स्वयम् । विविशुः । किमित्युत्प्रेक्षा-वाचकशब्दाभावाद्गम्या उत्प्रेक्षा अनेकेवोपमा चेति तयोः संसृष्टिः । कालुष्यस्य भावस्यैकत्वेऽपि धर्मिबहुत्वेन तद्बहुत्वोपचाराद्बहुवचनम् ॥ ९ ॥

**असुरवीरगृहाणि पृथग्विधै-**
**रशुभशंसिभिरानशिरे मुहुः ।**
**अमरराजपुरेषु जजृम्भिरे**
**शुभनिमित्तशतानि पुनः पुनः ॥ १० ॥**

**असुरेति** । असुरेषु वीराणां श्रेष्ठानां गृहाणि । पृथग्विधैः नानाविधैः । अशुभशंसिभिः असुराणां भाविकुलक्षयाद्यमङ्गलसूचकैर्निमित्तैः । मुहुः पुनः पुनः । आनशिरे व्याप्तानि । कर्मणि लिट् । अमरराजानां इन्द्रादीनां पुरेषु । पुनः पुनः । शुभनिमित्तानां शतानि बहवः शतसंख्याः । जजृम्भिरे जृम्भितानि ॥ १० ॥

**चरमतश्च ऋणादिव देवकी-**
**पतिरमुच्यत शृङ्खलतः स्थिरात् ।**
**निखिलबन्धनिवर्तकसन्निधौ**
**विगलनं निगलस्य किमद्भुतम् ॥ ११ ॥**

**चरमत इति** । देवकीपतिः वसुदेवः । चरमतः । 'ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः' इति श्रुतौ ऋणद्वयपाश्चात्त्यात् । ऋणात् 'प्रजया पितृभ्यः' इति प्रसिद्धादृणादिव । 'ऋत्यकः' इति प्रकृतिभावः । स्थिरात् दृढात् । शृङ्खलतः शृङ्खलाच्चेति । चकारो भिन्नक्रमः । कंसकृतनिगलादपि अमुच्यत

मुक्तः । तदेव दृढशृङ्खलविगलनं कविः समर्थयते । निखिलबन्धनिवर्तकस्य अविद्याद्यतिदृढसमस्तबन्धनिवृत्तिजनकस्य भगवतः सनिधौ । निगलस्य । विगलनम् । किमाश्चर्यम् । अर्थापत्त्यनुप्राणितः सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ११ ॥

उदितमात्मनि देवकसंभवा
दनुजभेदनमङ्कगतं दधौ ।
कमपि काञ्चनभूभृदधित्यका
हरिहयोपलशृङ्गमिवाद्भुतम् ॥ १२ ॥

**उदितमिति** । देवकसंभवा देवकात्मजा । आत्मनि । उदितम् । अङ्कगतं उत्सङ्गगतम् । दनुजभेदनं दनुजानां असुराणां विदारकं कृष्णम् । काञ्चनभूभृतः सुमेरोः अधित्यका ऊर्ध्वभूमिः । कमपि अनिर्वचनीयरूपम् । अत एव अद्भुतं आश्चर्यम् । हरिहयोपलशृङ्गम् । इन्द्रनीलरत्नशिखरमिव । दधौ । 'क्रीडाम्बुयन्त्रे शृङ्गोऽस्त्री पर्वताग्रप्रभुत्वयोः' इत्यनुशासनात् शृङ्गशब्दः पुँल्लिङ्गोऽपि । उपमालंकारः ॥ १२ ॥

विधृतशङ्खरथाङ्गगदाम्बुजः
शबलितः शुभया वनमालया ।
पितुरसूत मुदं पृथुकस्तदा
जलधिडिम्बनिभो जननीधृतः ॥ १३ ॥

**विधृतेति** । विधृतशङ्खरथाङ्गगदाम्बुजः ऊर्ध्वसव्यदक्षिणकरयोरधःसव्यदक्षिणकरयोश्च क्रमेण विधृतशङ्खचक्रगदाम्बुजः । जलनिधिपक्षे गदो गदनं नाम । 'गद व्यक्तायां वाचि' इति धातोः 'खनो घ च' इति

भावे घप्रत्ययः । तत्र घित्करणेन खनोऽन्यत्रापि भवतीति ज्ञापनात् । तथा च रथाङ्गगदः रथाङ्गनामेति योज्यम् । शुभया मनोज्ञया । वनमालया वैजयन्त्या । जलनिधिपक्षे वेलावनपङ्क्त्या । शबलितः चित्रितः । अत एव जलधिडिम्भानभः जलधिपोत इव स्थितः । जननीधृतः जनन्या मात्रा धृतः । पृथुकः अर्भक । पितुः वसुदेवस्य । मुद असूत संतोषमुत्पादयामास ॥ १३ ॥

**पितरमब्जभुवामनपायिनं**
**प्रियतमाङ्कगतं परिपश्यता ।**
**स विभुरानकदुन्दुभिना महा-**
**नवितथैः स्वगुणैरभितुष्टुवे ॥ १४ ॥**

**पितरमिति** । अब्जभुवां प्रतिकल्प भिन्नानां ब्रह्मणाम् । अपायी न भवतीत्यनपायी तं नित्यसिद्धम् । पितर नारायणम् । प्रियतमाङ्कगत परिपश्यता स्वप्रियाया उत्सङ्गगतमवलोकयता । आनकदुन्दुभिना वसुदेवेन । सः ब्रह्मणामपि जनकः । महान्विभुः । अवितथैः तथ्यैः । स्वगुणैः । अभितुष्टुवे अभिष्टुतः ॥ १४ ॥

**प्रणिपतामि भवन्तमनन्यधी-**
**रखिलकारणमाश्रिततारणम् ।**
**अनुगमादनिदंप्रथमा गिरः**
**किमपि यत्पदमेकमधीयते ॥ १५ ॥**

**प्रणिपतामीति** । अखिलकारण सर्वजगत्कारणम् । आश्रितानां शरणागतानां तारण संसारादुत्तारकम् । भवन्तम् । अनन्यधीः अन्य-

निरपेक्षमनस्कः सन् । प्रणिपतामि 'नेर्गद—' इत्यादिना णत्वम् । अनिदप्रथमाः अनादयः । गिरः वेदगिरः । किमपि इदमित्थमिति परिच्छेत्तुमशक्यम् । यत्च पद पद्यते प्राप्यते भक्तजनैरिति पद स्वरूपम् । अनुगमात् उपक्रमोपसहाराद्यैकरूप्य प्राप्य । ल्यब्लोपे पञ्चमी । अधीयते आमनन्ति । तथा हि कठवल्लीश्रुतिराह— 'सर्वे वेदा यत्पदमामनन्ति; तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्य चरन्ति; तत्ते पद सग्रहेण ब्रवीमि' इत्यारभ्य 'सोऽध्वन पारमाप्नोति तद्विष्णोः परम पदम्' इत्यन्तेन । त प्रणिपतामीति पूर्वेण सबन्धः । अभूषित. कान्त इति वत् अनन्यधीरिति नैरपेक्ष्ये । इद चेतरनैराश्यलक्षणमाकिचन्य प्रपदनाधिकारविशेष दर्शयितुम् ॥ १५ ॥

विषमकर्मविपाकपरम्परा-
विवशवृत्तिषु देहिषु दुस्तरम् ।
करुणया तव देव कटाक्षिताः
कति चिदेव तरन्ति भवार्णवम् ॥ १६ ॥

**विषमेति** । हे देव । विषमाणां विरुद्धानां दुरन्तानां कर्मणां विपाकस्य फलदानावस्थायाः परम्परया विवशा अवशवदा वृत्तिः वर्तन येषां तेषु दुष्कर्मभिर्बलात्ससारे विवर्तमानेष्वित्यर्थः । 'विवशः स्यादवश्यात्मानिष्टदुष्टधियोरपि' इति विश्वः । देहिषु शरीरिषु । 'यतश्च निर्धारणम् ।' इति सप्तमी । तव । करुणया । कटाक्षिताः विषयीकृताः । कतिचिदेव विरला एव । दुस्तरं कृच्छ्रेण तरितव्यम् । 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति खल्प्रत्ययः । भवार्णवं संसारसागरं । तरन्ति । ते च त्वद्दयाविषयत्वयोग्यास्त्वद्भक्ता विरला एवेत्यर्थः ॥ १६ ॥

**त्वदनुभावमहोदधिशीकरै-**
**रवशपातिभिराहितशक्तयः ।**
**अवधिभेदवतीमुपभुञ्जते**
**स्वपदसंपदमब्जभवादयः ॥ १७ ॥**

**त्वदनुभावेति** । अब्जभवादयः चतुर्मुखप्रभृतयो देवाः । अवशपातिभिः तत्तदनिच्छायामप्यवश्यमापतद्भिः । 'वश आयत्ततायां स्याद्वशमिच्छाप्रभुत्वयोः' इति विश्वः । 'आवश्यकाधमर्ण्ययोर्णिनिः' इति णिनिप्रत्ययः । त्वदनुभावमहोदधिशीकरैः त्वत्प्रभावाम्बुधेरम्बुकणैः त्वत्प्रभावलेशैरिति यावत् । आहितशक्तयः उत्पादितस्वस्वाधिकारनिर्वर्तनसामर्थ्याः सन्तः । अवधिभेदवतीं मर्यादाभेदवतीम् । स्वपदसंपदं स्वपदस्य सत्यलोकादेर्लक्ष्मीम् । उपभुञ्जते । तथा च पुराणवचनम्— 'एक एव जगत्स्वामी शक्तिमानच्युतः प्रभुः । ब्रह्मेन्द्रयमवह्नीन्दुदिवाकरमनुग्रहाः । तच्छक्त्याविष्टिनाः सर्वे मोदन्ते दिवि देवताः ।' इति ॥ १७ ॥

**श्रुतिकिरीटशुभाश्रयविग्रहः**
**परमसत्त्वनिधिः प्रतिपद्यसे ।**
**जगदनुग्रहमारुतचोदितो**
**विविधरूपतरङ्गविकल्पनाम् ॥ १८ ॥**

**श्रुतीति** । श्रुतिकिरीटः 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इत्यादिश्रुतीनां प्रतिपाद्यतयालङ्कारः शुभाश्रयः योगिनां ध्यानस्य शुभालम्बनभूतश्च विग्रहो मूर्तिः यस्य स तथोक्तः । परमसत्त्वनिधिः रजस्तमोऽसंवलिततया उत्कृष्टस्य सत्त्वगुणस्य शेवधिः । त्वम् । जगदनुग्रह एव

मारुतः तेन चोदितः प्रेरितः सन् । विविधानि रूपाणि अवतारा एव तरङ्गाः तेषां विकल्पनां रचनाम् । प्रतिपद्यसे प्राप्नोषि । अत्र जगदनुग्रहादौ मारुतत्वाद्यारोपादेकदेशविवर्तिरूपकेण भगवति समुद्रत्व प्रतीयते । तत्र समुद्रपक्षे श्रुतिकिरीटः श्रुतिशिरसा प्रतिपाद्यत्वेन अलङ्कारः भगवान् तस्य शेषशायिनः शुभाश्रयो विग्रहो यस्य सः । परमसत्त्वनिधिः उत्कृष्टजन्तूनां शङ्खशुक्तिकादीनां निधिरिति योज्यम् । 'सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः । आत्मनि व्यवसायेऽपि चित्ते प्राणिषु जन्तुषु ।' इति विश्वः ।

त्वयि न देव यदायतते न त-
ज्जगति जङ्गममन्यदथापि वा ।
इति महिम्नि तव प्रमिते परं
विभजने विविधैः स्थितमागमैः ॥ १९ ॥

**त्वयीति** । हे देव । त्वयि विषये यत् न आयतते यत्त्वय्यायत्त न भवति । तज्जङ्गमम् । अथान्यदपि स्थावर वा । जगति लोके । नास्ति स्थावरजङ्गमात्मक सर्वमपि वस्तु त्वदधीनमित्यर्थः । इति अनेन प्रकारेण । तव । महिम्नि । प्रमिते परिच्छिन्ने सति । विविधैः श्रुतिस्मृतीतिहासपुराणपाञ्चरात्रादिरूपैः । आगमैः । विभजने पर सक्षेपेण निश्चितस्य तव महिम्नो विशिष्य व्याकरण एव । स्थित निविष्टम् । सर्वप्रपञ्चस्य त्वदधीनत्व विशिष्य व्याख्यातुमेव श्रुतिपुराणादीनि शास्त्राणि विविधानि प्रवृत्तानीत्यर्थः ॥ १९ ॥

अखिललोकपितुस्तव पुत्रता-
महमयाचमनन्यमनोरथः ।

वरद वाञ्छितदानधृतव्रते
त्वयि तदेवमयत्नमपच्यत ॥ २० ॥

**अखिलेति** । हे वरद । अहम् । अखिललोकपितुः सकललोकजनकस्य । तव पुत्रतां त्वदीयपुत्रभावम् । अनन्यमनोरथः अन्याभिलाषरहितः सन् । अयाचं प्राग्जन्मनि याचितवानस्मि । याचतिः स्वरितेत्त्वादुभयपदी । वाञ्छितदानधृतव्रते भक्तजनाभिलषितविश्राणनभृतनियमे । त्वयि । तत् । याचनम् । एव अनेन प्रकारेण त्वदाविर्भावरूपेण । अयत्नं यत्नरहितं यथा तथा । अपच्यत स्वयमेव पक्वम् । कर्मकर्तरि यक् ॥२०॥

अवनिभारनिराकरणार्थिनां
क्रतुभुजामभिलाषमवन्ध्ययन् ।
जितरिपूणि बहूनि दयानिधे
विहरणानि विधातुमिहार्हसि ॥ २१ ॥

**अवनीति** । हे दयानिधे । अवनिभारनिराकरणार्थिनाम् । क्रतुभुजां देवानाम् । अभिलाषम् । अवन्ध्ययन् अविफलं कुर्वन् । जितरिपूणि जितशात्रवाणि । बहूनि । विहरणानि क्रीडितानि । इह भूमौ । विधातुं कर्तुम् । अर्हसि ॥ २१ ॥

दनुजमोहनदोहलिना त्वया
सहजलाञ्छनसंवरणं क्षमम् ।
तदधुना शमयन्मम साध्वसं
यत्रनिकाममधिगच्छ यथेप्सितम् ॥ २२ ॥

15020

**दनुजेति** । दनुजमोहनदोहलिना असुरमोहनेच्छावता । त्वया । सहजलाञ्छनस्य चतुर्भुजत्वादेः संवरणं गोपनम् । कर्तुं क्षमं योग्यम् । 'योग्यशक्तहिताः क्षमाः' इत्यमरः । तत् तस्मात् । अधुना । मम । साध्वसं अप्राकृतरूपदर्शनजन्यं भयम् । शमयन् अपनयन्सन् । यथेप्सितं ईप्सितमनतिक्रम्य ईप्सितानुसारेण । 'यथा सादृश्ये' इत्यव्ययीभावः । यवनिकां तिरस्करणीं सहजलाञ्छनाच्छादकं रूपान्तरं । अधिगच्छ गृहाणेत्यर्थः । 'दोहलं दोहदं छन्दः' इति इच्छापर्यायेष्वमरकोशशेषः । सहजलाञ्छनसंवरणमित्यत्र कर्तुमित्यनध्याहारे त्वयेति कर्तरि तृतीया नोपपद्येत । 'कर्तृकर्मणोः कृति' इति कृद्योगे कर्तरि षष्ठीविधानात् । तदध्याहारे त्वव्ययोगेन 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति षष्ठीनिषेधात्कर्तरि तृतीयोपपद्यते । न च तदनध्याहारेऽपि सहजलाञ्छनस्येति कर्मणि षष्ठीति 'उभयप्राप्तौ कर्मणि' इति षष्ठीनियमात्कर्तरि तृतीयोपपद्यत इति वाच्यम् । उभयप्राप्तौ कर्मणि षष्ठ्याम् 'कर्मणि च' इति समासनिषेधादत्र शेषषष्ठीत्वेनैव समासस्योपपाद्यत्वात् । केचिदनध्याहारेऽपि 'अन्तर्धौ येनादर्शनमिच्छति' इति सौत्रनिर्देशदर्शनात्कृद्योगेऽपि कर्तरि तृतीयेत्याहुः ॥ २२ ॥

**इति स भीतमवेक्ष्य दयानिधिः**
**स्मितमुखो वसुदेवमभाषत ।**
**त्वमसि मे जनकः किमिहान्यथा**
**किमपि तात मुधा कथितं त्वया ॥ २३ ॥**

**इतीति** । इति उक्तप्रकारेण । सभीतं ससाध्वसम् । भीतमिति भावे क्तः । वसुदेवम् । अवेक्ष्य । स्मितमुखः प्रहसिताननः । दयानिधिः देवः । अभाषत । त्वं मे जनकः पितासि । हे तात । इह पुत्ररूपेऽस्मिन्विषये ।

त्वया । अन्यथा पितॄणां पुत्रेषु च उक्तप्रकारस्ततोऽन्यप्रकारेण । किमपि विशिष्य मया अनुवदितुमप्ययुक्तं 'प्रणिपतामि भवन्तमनन्यधीः'—इत्यादिरूपम् । किमिति मुधा कथितम् । एवं वक्तुमयुक्तमित्यर्थः ॥ २३ ॥

**इयममर्त्यपितुस्तव गेहिनी**
**दिविषदां जननी मम चानघा ।**
**अभिमतं युवयोरनवग्रहं**
**समयभावि मयैव समर्थ्यते ॥ २४ ॥**

**इयमिति** । अनघा अनवद्या । अमर्त्यानां इन्द्रादिदेवानां पितुः काश्यपरूपस्य । तव । गेहिनी पत्नी । इयं देवकी । दिविषदां इन्द्रादीनाम् । मम च उपेन्द्ररूपस्य । जननी माता, अदितिरूपत्वात् । अतः पूर्वजन्मप्रभृति मम जननी इयमपि ममात्यन्तपूज्येति भावः । ततः किमित्यत आह—अभिमतमिति । युवयोः इयं च त्वं च युवामित्येकशेषः, तयोः । अभिमतं कंसनिरोधापनयनादिकम् । अनवग्रहं अप्रतिबन्धं यथा तथा अवग्रहशब्देन वृष्टिप्रतिबन्धवाचिना प्रतिबन्धसामान्यं लक्ष्यते । समयभावि स्वकाले भविष्यत् । मयैव । समर्थ्यते संपाद्यते । वर्तमानसामीप्ये भविष्यति लट् । युवयोरभिमतसंपादनं पुत्रभूतस्य ममैव कृत्यम् । तत्र युवाभ्यां वक्तव्यं नास्तीत्यवधारणाभिप्रायः । शक्तेन त्वया इदानीमेव अस्मदभिमतं किमिति न संपाद्यत इति शङ्कावारणाय कस्यचित्परिपाककालस्यापि प्रतीक्षणीयत्वाभिप्रायेण समयभावीत्युक्तम् । इदं च कृष्णस्य तदभिमतसंपादनप्रतिज्ञावचनं नन्दगृहे स्वस्य नयनं कर्तव्यमिति वक्ष्यमाणतया तत्र स्थितस्य तवावयोर्विस्मरणं स्यादिति शङ्कावारणायेति बोध्यम् ॥ २४ ॥

यदि बिभेषि भजामि मनुष्यता-
मथ च मां नय नन्दगृहं क्षणात् ।
दुहितरं च समानय तस्य तां
गतभयो भव दूरगते मयि ॥ २५ ॥

इदानीं तदेव प्रस्तुतकार्यमाह—**यदीति** । यदि बिभेषि दुर्दर्शमिद रूपं दृष्ट्वा भयं प्राप्नोषि चेत् । मनुष्यता भजामि । अथ तदनन्तरम् । मां नन्दगृह नय प्रापय । तस्य नन्दस्य । दुहितर तत्रेदानीमुत्पन्नां कन्यां च । समानय । नन्दस्य मयि स्वापत्यत्वभ्रान्तये कंसस्य तस्या त्वदपत्यत्व-भ्रान्तये चेति भावः । मयि दूरगते नन्दागार गते सति । गतभयो भव शिशुरूपावलम्बने मयि यत्किंचित्कंसः करिष्यतीति भय त्यजेत्यर्थः ॥२५॥

अथ निशम्य नियोगमभङ्गुरं
मधुजितो मधुराक्षरमन्थरम् ।
हितमिदं प्रतिपद्य तमाददे
गुरुतरं कृपया लघुतां गतम् ॥ २६ ॥

**अथेति** । अथ वसुदेवः । अभङ्गुर अभङ्गशील कदाचिदप्यन्यथाभाव-रहितम् । मधुराणि स्वादून्यक्षराणि यस्येति मधुराक्षर तच्च मन्थर मृदुप्रसर च । मधुजितः कृष्णस्य । नियोग आज्ञावचः । निशम्य श्रुत्वा । इद नन्दगृहे नयनम् । हितम् । प्रतिपद्य विचिन्त्य । गुरुतर स्वतः अतिश-येन गुरुम् । कृपया वसुदेवस्य भारो भविष्यतीति दयया । लघुतां गत प्राप्तम् । तम् । आददे, नन्दगृह नेतुमिति भावः ॥ २६ ॥

श्रुतिसुगन्धितदाननचन्द्रिका-
मुषितमोहतमा मुनिसंनिभः ।
अधिजगाम स तन्मयतां क्षणा-
दनिमिषत्वमुत प्रतिसंदधे ॥ २७ ॥

अथ वसुदेवस्य निर्निमेषतया तदाननैकाग्र्यमेवोत्प्रेक्षते—**श्रुतीति** । शोभनो गन्धो यस्येति सुगन्धि । 'गन्धस्येदुत्पूतिसुसुरभिभ्यः' इति इत्प्रत्ययः । श्रुत्या सुगन्धि च तत् तस्य सुतस्याननं च तस्य चन्द्रिकया कान्त्या मुषितं निरस्तं मोहतमः अज्ञानान्धकारः यस्येति तथोक्तः । मुनिसन्निभः मुनिसदृशो वसुदेवः । क्षणात् । तन्मयतां कृष्णतादात्म्यम् । अधिजगाम प्राप । उत अथवा । अनिमिषत्वं प्राक्तनस्वरूपतया देवत्वम् । प्रतिसन्दधे । स्वकीयानिमिषत्वानुसन्धानादिदानीं निमेषरहितो जात इत्यर्थः । उत्प्रेक्षाद्वयमिदं वाचकाप्रयोगाद्गम्यम् । चन्द्रिकेति मुखकान्तेर्निगीर्याध्यवसानादतिशयोक्तिः । मोहतम इति **रूपकं** चेति तयोः सङ्करः । उत्प्रेक्षाद्वयेन **संसृष्टिः** ॥ २७ ॥

तुहिनभानुदिवाकरलोचनं
निगमनिःश्वसितं स्वसुतस्य तत् ।
अनुबभूव मुहुर्मुहुरादरा-
दनघमाननमानकदुन्दुभिः ॥ २८ ॥

**तुहिनेति** । तुहिनभानुदिवाकरलोचनं चन्द्रसूर्यनयनम् । निगमनिःश्वसितं वेदनिःश्वासम् । 'अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेद—' इत्यादिश्रुतेः । अनघं रम्यम् । तत् । स्वसुतस्य । आननम् । आदरात् । मुहुर्मुहुः । अनुबभूव पश्यति स्म ॥ २८ ॥

जिगमिषुः स दिशो दश यादवः
सकृदवैक्षत साध्वसविह्वलः ।
अनघवैभवमर्भकमुद्वह-
न्नमितगुप्तिनिरुद्धगतौ गृहे ॥ २९ ॥

**जिगमिषुरिति** । अनघवैभव अखण्डितप्रभावम् । अर्भक कुमारम् । उद्वहन् । जिगमिषुः नन्दगृह गन्तुमिच्छुः । स यादवः वसुदेवः । अमितगुप्तिभिः कवाटसघटनयामिकशुकशारिकानिवेशनादिभिः निरुद्धगतौ प्रतिबद्धगमने । गृहे । साध्वसेन भयेन विह्वलो विक्लबः स्वाङ्गधारणेऽप्यसमर्थः सन् । दशापि दिशः । सकृत् । अवैक्षत । 'युवोरनाकौ' इति सौत्रनिर्देशादागमविधिरनित्य इति 'निरुद्धगतौ' इत्यत्र नुमागमो न ॥ २९ ॥

विजघटे सहसैव कवाटिका
व्रजमथ व्रजतो यदुभूभृतः ।
उपलकल्पमशेरत रक्षकाः
सरणिमादिदिशुर्गृहदेवताः ॥ ३० ॥

**विजघट इति** । अथ तदीक्षणानन्तरम् । व्रज गोकुलम् । व्रजतः । यदुभूभृतः यदुराजस्य । सबन्धसामान्यविवक्षया षष्ठी । सहसा शीघ्रमेव । कवाटिका कवाटम् । विजघटे विघटते स्म । रक्षकाः । उपलकल्प पाषाणतुल्य यथा तथा । निश्चेष्टमिति यावत् । अशेरत । गृहदेवताः गृहाधिष्ठात्र्यो देवताः । सरणि निर्गमनमार्गम् । आदिदिशुः उपदिदिशुः । कारागृहद्वारकवाटस्याल्पत्वविवक्षया स्त्रीत्वम् । 'स्त्री स्यात्काचिन्मृणा-

ल्यादिर्विवक्षापचये यदि ' इति. स्त्रीत्वे गौरादित्वान्ङीष्प्रत्यये ' के णः ' इति ह्रस्वत्वे च सति कवाटिकेति रूपम् ॥ ३० ॥

क्षरदसूनिव यामिकरक्षका-
न्मुषितमञ्जुगिरः शुकशारिकाः ।
यदुकुलेन्दुरपश्यदमीलिता-
न्परिजनानपि चित्रगतानिव ॥ ३१ ॥

**क्षरदिति** । यदुकुलेन्दुः यदुकुलस्येन्दुरिवाह्लादको वसुदेवः । क्षरदसून् निर्यत्प्राणानिव बाह्यरवबोधरहितान् । यामिकरक्षकान् अनुयाम नियुक्तान्कारागृहरक्षकान् । मुषितमञ्जुगिरः अपगतमञ्जुभाषणाः । शुकशारिकाः । अमीलितान् उन्मीलितलोचनानपि । चित्रगतानिव अकिंचित्करान् । परिजनान् । अपश्यत् । शारिका. शुकवद्भाषणशीलाः पक्षिविशेषाः । शुकाङ्गना इति केचित् ॥ ३१ ॥

उपयतो विशिखां सदनान्तरा-
त्कुवलयाभकुमारतनुत्विषा ।
शतमखोपलमेचकया द्रुतं
शमितसंतमसा हरितो बभुः ॥ ३२ ॥

**उपयत इति** । सदनान्तरात् गृहाभ्यन्तरात् । विशिखां रथ्याम् । उपयतः उपगच्छतः । वसुदेवस्येति शेषः । सबन्धसामान्यविवक्षया षष्ठी । हरितः दिशः । शतमखोपलमेचकया इन्द्रनीलरत्नश्यामलया । ' उपलः प्रस्तरे रत्ने ' इति विश्वः । कुवलयाभस्य इन्दीवरत्विषः कुमारस्य तनुत्विषा देहप्रभया । शमितसंतमसाः निराकृतगाढान्धकाराः । बभुः भान्ति स्म ॥ ३२ ॥

श्रुतिमयो विहगः परितः प्रभुं
व्यचरदाशु विधूतनिशाचरः ।
अनुजगाम च भूधरपन्नगः
स्फुटफणामणिदीपगणोद्वहः ॥ ३३ ॥

**श्रुतीति** । श्रुतिमयः त्रिवृद्गायत्र्यादिरूपः । विहगः सुपर्णः । 'सुपर्णोऽसि गरुत्मान् त्रिवृत्ते शिरः' इत्यादि श्रुतेः । प्रभुं कृष्णम् । परितः सर्वतः । 'अभितः परित –' इत्यादिना द्वितीया । आशु शीघ्रम् । विधूताः पक्षवातेन कम्पिताः निशाचरा रात्रौ चरन्तो राक्षसादयो येन तथाभूतः सन् । व्यचरत् चरति स्म । भूधरः भुवो भूमेर्धरो धारयिता । पन्नगः शेषश्च । स्फुटाः प्रव्यक्ताः फणामणय एव दीपाः तेषां गणस्य समूहस्य उद्वहो वोढा सन्, फणारत्नदीपैर्मार्गं प्रकाशयन्निति यावत् । अनुजगाम अनुगच्छति स्म ॥ ३३ ॥

दिनकरोपमदीधितिभिस्तदा
दनुजदेहविदारणदारुणैः ।
परिगतः किल पञ्चभिरायुधै-
र्यदुपतिः प्रजहावसहायताम् ॥ ३४ ॥

**दिनकरेति** । तदा तस्मिन्समये । दिनकरोपमदीधितिभिः रविप्रतिमकिरणैः । दनुजदेहानां असुरशरीराणां विदारणेन भेदनेन दारुणैः भीषणैः । पञ्चभिः । आयुधैः शङ्खचक्रगदाखड्गशार्ङ्गरूपैर्भगवदायुधैः । परिगतः परिवृतः । यदुपतिः वसुदेवः । असहायतां सह अयन्ते गच्छन्तीति सहायाः सहयात्राः । 'सहायास्तु सयात्राः स्युः' इति शब्दार्णवः । तद्रा-

हित्यम् । प्रजहौ । किलेति परकृतौ 'इति किलोपाध्यायः कथयति' इतिवत् ॥ ३४ ॥

प्रगुणमिन्दुनिवेदितपद्धति-
र्यदुकुलेन्दुरथो यमुनानदीम् ।
परमपूरुषमक्षतपौरुषः
पतगराज इवाशु वहन्ययौ ॥ ३५ ॥

**प्रगुणमिति** । अथो अनन्तरम् । अक्षतपौरुषः अखण्डपराक्रमः । अत एव, पतगराजः गरुड इव । परमपूरुष भगवन्तम् । 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' इति समासः । वहन् । यदुकुलेन्दुः यदुकुलस्य इन्दुरिव आह्लादको वसुदेवः । प्रगुण ऋजु यथा तथा । 'अजिह्मप्रगुणौ' इत्यमरः । इन्दुना निवेदितपद्धतिः दर्शितमार्गः सन् । आशु शीघ्रम् । यमुनानदीम् । ययौ ॥ ३५ ॥

तनुतरङ्गपृषत्कणशीतलः
सुरभिकैरवसौहृदवासितः ।
अभिसमेतमसेवत मारुतो
यमुनया प्रहितो यदुपुंगवम् ॥ ३६ ॥

**तनुतरङ्गेति** । तनुभिः सूक्ष्मैः तरङ्गपृषत्कणैः ऊर्मिबिन्दुलवैः शीतलः । 'पृषन्ति बिन्दुपृषताः' इत्यमरः । सुरभिणः कैरवस्य कुमुदस्य सौहृदेन मित्रभावेन संसर्गेण वासितः सुरभितः । यमुनया नद्या । प्रहितः प्रेषितः । मारुतः । अभिसमेत प्राप्तम् । यदुपुङ्गव यदुश्रेष्ठं वसुदेवम् । असेवत श्रान्त्यपनयेन सेवामकरोदित्यर्थः । सुहृदयशब्दस्य युवादित्वाद्भावे अण्प्रत्ययः । 'हृदयस्य हृल्लेखयदणलासेषु' इति हृद्भावे आदिवृद्धौ

**सौहृदशब्दः** । ननु कथं ‘ हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ’ इति नोभयपदवृद्धिः । इत्थम् । अणि परतो हृदादेशवृद्धिशास्त्रयोरन्यत्र सावकाशयोः परत्वाद्वृद्धिशास्त्रं प्रथमं प्रवर्तते । तत्प्रवृत्तिकाले हृदन्तत्वाभावान्नोभयपदवृद्धिरित्यादिवृद्धिः । ततो हृदादेशः । तदनन्तरं तु हृदन्तत्वोपजीवनेन नोभयपदवृद्धिः । आकृतिपदार्थपक्षे वृद्धेरेकत्वात् तस्याश्चैकस्मिन्पदे सकृत्प्रवृत्तायास्तत्रैव पुनः प्रवृत्त्यभावात् । यद्वा ‘ हृद्भगसिन्ध्वन्ते–’ इत्यत्र अन्तग्रहणसामर्थ्यादिदं विज्ञायते हृदन्तादेव यत्र अणादयो विहितास्तेषु परत उभयपदवृद्धिः, न तु हृदयान्तादणाद्युत्पत्त्यनन्तरं हृदादेशे भवतीति । तेन शोभनहृदयार्थक सुहृदयशब्दप्रकृतिकं सौहृदमिति भवति । सौहार्दमिति तु मित्रवाचिसुहृच्छब्दप्रकृतिकमिति न कश्चिद्दोषः । केचिदाहुः युवादिषु सुहृत्सुहृदयशब्दौ द्वावपि पठ्येते तत्र सुहृच्छब्दस्यापि सुहृदयशब्दप्रकृतिकस्य एकदेशविकृतन्यायेन सुहृदयशब्दपाठादेवाणि सिद्धे पुनः पाठोऽन्यत्र सुहृदयशब्दे यद्भवति तत्सुहृच्छब्दे नास्तीति ज्ञापनार्थम् । तेन सुहृदयशब्दादणि हृदादेशे सति उभयपदवृद्धिः, सुहृच्छब्दादणि तु नोभयपदवृद्धिरिति । अपरे तु सञ्ज्ञापूर्वको विधिरनित्य इति क्वचिदुत्तरपदवृद्ध्यभावमाहुः ॥ ३६ ॥

**पवनकम्पितपल्लवपाणिका**
**प्रहितपुष्पभरा पदवीमुखे ।**
**उपजुहाव किल भ्रमरस्वनै-**
**र्यदुपतिं यमुनोपवनस्थली ॥ ३७ ॥**

**पवनेति** । पवनेन कम्पितः पल्लव एव पाणिर्यस्यास्तथाभूता । **पदवीमुखे** मार्गपुरोभागे । प्रहितपुष्पभरा क्षिप्तपुष्पनिचया । यमुनो-

पवनस्थली यमुनातटारामस्थली । यदुपतिं वसुदेवम् । भ्रमरस्वनैः । उप-
जुहाव किल उपह्वयति स्म किल । यथा राज्ञि गच्छति मार्गे पुष्पार्पणादि-
राजोपचारपूर्वकमाह्वयन्ति तद्वदाह्वानमुत्प्रेक्ष्यते ॥ ३७ ॥

निमिषितासितनीरजलोचना
मुकुलिताब्जमुखी सवितुः सुता ।
ललितदीनरथाङ्गयुगस्वना
कुहकदैन्यमशोचदिव प्रभोः ॥ ३८ ॥

**निमिषितेति** । निमिषितासितनीरजलोचना मुकुलितेन्दीवरनयना । मुकुलिताब्जमुखी मुकुलिताम्बुजवदना । ललितदीनरथाङ्गयुगस्वना मनोज्ञविरहकातरचक्रवाककदम्बनिनदा । सवितुः सुता यमुना । प्रभोः कृष्णस्य । कुहकदैन्यं कंसभयादिव रात्रौ नन्दकुलप्रयाणरूपं मायाविनो दैन्यम् । अशोचदिव शोकं कृतवतीत्युत्प्रेक्षा । दैन्यानर्हस्य दैन्यं दृष्ट्वा स्त्रिय इत्थं शोचन्तीति भावः । 'ना भावभेदे स्त्रीनृत्तं ललितं त्रिषु सुन्दरे' इति शब्दार्णवे । रात्राविन्दीवरनिमीलनवर्णनं द्वितीयसर्गे सङ्गमितम् ॥ ३८ ॥

विकचकैरवतारकिताकृतिं
तनुमतीमिव शारदयामिनीम् ।
त्वरितमम्बुनिधेरभिसारिकां
तरितुमैहत सत्यसमीहितः ॥ ३९ ॥

**विकचेति** । विकचकैरवैः विकसितकुमुदैः तारकिता संजाततारका आकृतिः यस्यास्ताम् । अत एव, तनुमतीं शारदयामिनीमिव स्थितां

मूर्तां शरत्कालप्रभवां रात्रिमिव स्थिताम्। अम्बुनिधेः अभिसारिकाम् । 'रतार्थिनी तु या याति सङ्केत साभिसारिका ।' अत्र समुद्रमुद्दिश्य गमनार्थमुनैव तदभिसारिकेत्यध्यवसीयते ताम् । सत्यसमीहितः अवितथाभिलाषो वसुदेवः । त्वरित शीघ्रम् । तरितुम् । ऐहत ऐच्छत् ॥ ३९ ॥

**भवति किं नु भविष्यति वा किमि-**
**त्यनवधारितशौरिविहारया ।**
**चकितयेव विरोचनकन्यया**
**विधुतवीचिकरं किल विव्यथे ॥ ४० ॥**

**भवतीति** । अनवधारितशौरिविहारया अनाकलितभगवत्क्रीडया, नन्दकुलप्रयाणादिक क्रीडामात्र वस्तुतो न कंसभयप्रयुक्तमित्यजानत्येति यावत् । विरोचनस्य सूर्यस्य कन्यया यमुनया । कि नु भवति किमिदानीं कृच्छ्र वर्तते । किं वा भविष्यति इतः पर किं वा भविष्यति । इति चकितया कर्मचरित्रमनुचिन्त्य भीतया सत्या । विधुतवीचिकर विधुतोर्मिहस्त यथा तथा । विव्यथ इव किल ॥ भावे लिट् ॥ ४० ॥

**घनतमःपरिपाकमलीमसै-**
**र्गुरुभिरूर्मिगणैरनुपप्लुतः ।**
**अतितार दिनाधिपतेः सुता-**
**मनघयोगमना इव संसृतिम् ॥ ४१ ॥**

**घनेति** । घनतमःपरिपाकमलीमसैः गाढान्धकारपरिणामैरिव मलिनैः । गुरुभिः पृथुभिः । ऊर्मिगणैः वीचिनिचयैः । योगिपक्षे सान्द्रतमोगुणपरिणामतया मलिनैः । ऊर्मिगणैः अशनायापिपासाशोकमोहजरामरणरू-

पयहूर्मिनिकरैः । अनुपप्लुतः अनुपद्रुतः । स वसुदेवः । अनघयोग अप्रतिबन्धयोगं मनो यस्य स योगी । संसृतिं संसारमिव । दिनाधिपतेः सुतां यमुनां । अतिततार ॥ ४१ ॥

**यदुपतेर्यमुना त्वरितं यतः**
**प्रतियतश्च समर्पितपद्धतिः ।**
**स्वयममर्त्यमदावलमज्जनी**
**चरणलङ्घ्यजला समजायत ॥ ४२ ॥**

**यदुपतेरिति** । स्वयं स्वतः । अमर्त्यमदावलस्य ऐरावतादेर्देवगजस्य मज्जनी निमज्जनकरी । मस्जिधातोरधिकरणार्थे ल्युटि ङीप् । यमुना । चरणलङ्घ्यजला चरणतार्यसलिला सती । त्वरितं शीघ्रम् । यतः प्रतियतश्च गच्छतः प्रतिनिवर्तमानस्य च । यदुपतेः वसुदेवस्य । समर्पितपद्धतिः समजायत दत्तमार्गा बभूव ॥ ४२ ॥

**अजनि पश्चिमतो भृशमुन्नता**
**रविसुता पुरतः स्थलशेषिता ।**
**अधिरुरोह पदं किमसौ हरेः**
**प्रतिययौ यदि वा पितरं गिरिम् ॥ ४३ ॥**

**अजनीति** । रविसुता यमुना । पश्चिमतः पश्चिमभागे । आद्यादित्वात्तसिः । भृशम् । उन्नता । अजनि जाता, वसुदेवमार्गे समागच्छतः प्रवाहस्य निरोधादिति भावः । जनिधातोः कर्तरि लुङि 'दीपजनबुध—' इत्यादिना चिण् । पुरतः पुरोभागे । स्थलशेषिता सजातस्थलशेषा । अजनीत्यनुषङ्गः । इद यमुनायाः सस्थानमुत्प्रेक्ष्यते । असौ यमुना । हरेः पदं आकाशम् । अधिरुरोह किं अधिरूढवती किम् । यदि वा अथवा ।

पितरं गिरिं कलिन्दपर्वतम् । प्रतिययौ प्रतिनिवृत्ता । पश्चाद्गौरत्वेन प्रथमोत्प्रेक्षा, पुरतः स्थलशेषतया द्वितीया । अत्रोत्प्रेक्षाद्वयेऽप्यन्यदप्येकं निमित्त व्यज्यते । गङ्गाया गगनप्रवाहगुणोत्कर्षेण पतिस्तस्यामेव रज्येदिति तदसहिष्णुता । सपत्न्युत्कर्षासहिष्णवो हि तत्साम्ये प्रयतन्ते । तदशक्तौ पितृगृहमेव प्रतिनिवर्तन्ते ॥ ४३ ॥

**अकृतसेतुमनाकलितप्लवां**
**जननसिन्धुदृढप्लवमुद्वहन् ।**
**रविसुतामतिलङ्घ्य रमापतिं**
**सपदि घोषसमीपमुपानयत् ॥ ४४ ॥**

**अकृतेति** । जननसिन्धोः भवसागरस्य दृढप्लव अशिथिलोडुपमिव तारक कृष्णम् । उद्वहन् वसुदेवः । अकृतसेतु अनारचितसेतुबन्धाम् । अनाकलितप्लवां अविन्यस्तोडुपाम् । रविसुतां यमुनाम् । अतिलङ्घ्य । रमापतिं तमेव कृष्णम् । सपदि । घोषसमीपम् । उपानयत् । आभीरग्रामान्तिक प्रापयत् । 'घोष आभीरपल्ली स्यात्' इत्यमरः ॥ ४४ ॥

**अथ कयाचन कारणनिद्रया**
**विवशसुप्तजनं व्रजमाविशत् ।**
**धनदपत्तनसंपदि यत्र सा**
**स्वसुतमग्र्यमसूयत रोहिणी ॥ ४५ ॥**

**अथेति** । कयाचन अनिर्वचनीयया आश्चर्यभूतया । कारणनिद्रया जगत्कारणभूतया निद्रया, भगवन्माययेति यावत् । विवश अवशात्मक यथा तथा सुप्तजनम् । व्रज गोकुलम् । अविशत् प्रविष्टः । धनदपत्तनस्य कुबेरनगरस्य संपदिव सपद्यस्मिन् तथाभूते । यत्र व्रजे । सा स्वस्य

ज्येष्ठपत्नी । रोहिणी । अम्य अग्रे भव स्वसुत बलदेवम् । असूयत । 'षूञ् प्राणिप्रसवे' इति दैवादिकधातोः कर्तरि लङ् ॥ ४५ ॥

**उपगते वसुदेवसुतेऽन्तिकं**
**नरकवैरिणि नन्दकुटुम्बिनी ।**
**अरणिसंभवपावकसंगमा-**
**दभजताध्वरवेदिरिव श्रियम् ॥ ४६ ॥**

**उपगत इति** । नन्दकुटुम्बिनी यशोदा । वसुदेवसुते । नरकवैरिणि नरकासुरस्य रिपौ भगवति । अन्तिक उपगते सति । अध्वरस्य वेदिः । अरणिसभवस्य पावकस्य वैतानिकाग्नेः सगमादिव । श्रिय शोभाम् । अभजत ॥ ४६ ॥

**न्यधित नन्दवधूसविधे सुतं**
**द्रुतमुपादित गोपकुमारिकाम् ।**
**अथ निनाय च देवकनन्दनी-**
**शयनमानकदुन्दुभिराशु ताम् ॥ ४७ ॥**

**न्यधितेति** । आनकदुन्दुभिः । नन्दवधूसविधे यशोदासमीपे । सुत कृष्णम् । न्यधित निधत्ते स्म । निपूर्वाद्धधातेरात्मनेपदिनो लुङ् । 'स्थाघ्वोरिच्च' इतीत्वम् । 'ह्रस्वादङ्गात्' इति सिज्लोपः । द्रुत शीघ्रम् । गोपस्य नन्दस्य कुमारिकां योगनिद्रावताररूपाम् । उपादित उपादत्त स्म । अथ उपादानान्तरम् । तां कुमारिकाम् । देवकनन्दनीशयन देवक्याः सूतिकागृहशयनम् । आशु । निनाय । नन्दनीशब्दः प्राग्द्वितीयसर्गे व्याख्यातः ॥ ४७ ॥

अनवबुद्धजनार्दनकन्यका-
विनिमयस्त्वथ भोजगणेश्वरः ।
दृषदि तामभिहन्तुमपातय-
त्प्रतिजघान च सा चरणेन तम् ॥ ४८ ॥

**अनवबुद्धेति** । अथ तन्नयनानन्तरम् । भोजगणस्य भोजवंश्यानां संघस्य ईश्वरः कंसः । अनवबुद्धजनार्दनकन्यकाविनिमयः अनवबुद्धः अनवगम्यमानः जनार्दनकन्यकाविनिमयः यस्य तथाभूत एव सन् । तुः पादपूरणे । 'तु' पादपूरणे भेदे समुच्चयेऽवधारणे' इति विश्वः । ताम् । अभिहन्तुम् । दृषदि शिलायाम् । अपातयत् । सा कुमारिका । चरणेन । तम् । प्रतिजघान प्रतिहन्ति स्म ॥ ४८ ॥

नृपतिराशु पदा निहतस्तया
निपतितोदितकन्तुकवद्भवन् ।
दवसमावृतशैलनिभः क्रुधा
दरनिमीलितदृष्टिरदूयत ॥ ४९ ॥

**नृपतिरिति** । तया कुमार्या । आशु शीघ्रम् । पदा निहतः चरणेन ताडितः । 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः । निपतितोदितकन्तुकवत् भवन् निपतितोद्गतकन्तुकवज्जायमानः, चरणताडनवेगात्कन्तुकवत्पतनोत्पतनदशामनुभवन्निति यावत् । क्रुधा कोपेन । दवसमावृतशैलनिभः दवाग्निपरिवृतशैलोपमः तद्वत्प्रज्वलन्निति यावत् । दरनिमीलितदृष्टिः ईषन्निमीलितलोचनः । नृपतिः कंसः । अदूयत पर्यतप्यत । कन्तुकस्तकारमध्यम इति धातुवृत्तिकारः । कं शिरो दुनोति नमनोन्नमनेक्षणादिभिरिति दकारमध्य इति क्षीरतरङ्गिणीकारः ॥ ४९ ॥

उदपतद्दिवमुग्रघनस्वना
युवतिरूपयुगात्ययशर्वरी ।
असुरघातिभिरष्टभिरायुधै-
रलघुभिश्चपलाभिरिवाश्रिता ॥ ५० ॥

**उदपतदिति** । उग्रघनस्य क्रूरमेघस्य स्वन इव स्वनो यस्याः सा, प्रलयशर्वरीपक्षे उग्रो घनस्वनः प्रलयघनगर्जितरूपो यस्यामिति विग्रहः । असुरान् पौनःपुन्येन घ्नन्तीत्यसुरघातिभिः । 'बहुलमाभीक्ष्ण्ये' इति णिनिः । 'होहन्तेर्ञ्णिन्नेषु' इति कुत्वम् । 'हनस्तोऽचिण्णलोः' इति तादेशः । अष्टभिः आयुधैः अष्टभुजगृहीतैः । 'सायुधाष्टमहाभुजा' इति विष्णुपुराणोक्तेः । अलघुभिः । चपलाभिः विद्युद्भिरिव । आश्रिता । युवतिरूपयुगात्ययशर्वरी तरुणीरूपा युगान्तकालरात्रिः । दिव अभ्र-मुद्दिश्य । उदपतत् उत्पपात । **उपमानुप्राणितोऽपह्नुत्यलंकारः** ॥

अथ च भोजनियन्तुरयन्त्रिता
दनुजहन्तुरुदन्तमुदैरिरत् ।
पटु गभीरमुदारमनाकुलं
हितमविस्तरमर्थ्यमविप्लवम् ॥ ५१ ॥

**अथेति** । अथ उत्पतनानन्तरम् । अयन्त्रिता स्वतन्त्रा । भोजानां राज्ञां नियन्तुः कंसस्य । दनुजहन्तुः उदन्त कृष्णस्य वृत्तान्तम् । उदैरिरत् उदीरयति स्म । उत्पूर्वादीरयतेर्लुङि रूपम् । उत्पतनक्रियासमुच्चयार्थश्चकारः । पट्वित्यादीनि क्रियाविशेषणानि । पटु तीक्ष्णम्, असह्यमिति यावत् । 'पटुस्तीक्ष्णे च नीरोगे चतुरेऽन्यवत्' इति विश्वः ।

गभीर अमन्द्रध्वननम् । उदार परुषवर्णप्रायतया विकटाक्षरबन्धम् । 'विकटाक्षरबन्धत्वमौदार्य परिकीर्तितम्' । अनाकुलं असंभ्रान्तम् । हितं पथ्यम् । अविस्तरं शब्दविस्तररहितम् । अर्थ्यं अर्थादनपेतम् । अविप्लव वर्णलोपविपर्यासाद्यन्यथाभावरहितम् च यथा तथा उदैरिर-दिति सम्बन्धः ॥ ५१ ॥

**अहमशेषसुरासुरमोहनी**
**यवनिका मधुकैटभमर्दिनः ।**
**प्रबलशुम्भनिशुम्भनिषूदने**
**प्रणिहिता हतया तव किं मया ॥ ५२ ॥**

**अहमिति** । अहम् । अशेषाणां सुरासुराणां मोहनी मोहकारिणी । करणे ल्युटि ङीप् । मधुकैटभमर्दिनः विष्णोः । यवनिका तिरस्करिणी आच्छादनी योगनिद्रेति यावत् । अहं च । प्रबलयोः शुम्भनिशुम्भयोः निषूदने वधे । । प्रणिहिता भगवता प्रेषिता । मया हतया किं त्वद्वधाभिमधिरहिताया मम हननेन तव अनिष्टपरिहारादि किमपि साध्यं नास्तीत्यर्थः । गम्यमानसाधनक्रियापेक्षया करणे हतया मयेति तृतीया ॥ ५२ ॥

**वसति नन्दगृहे विबुधद्विषां**
**दमयिता वसुदेवसमुद्भवः ।**
**अयमसौ तव नाशयितेति सा**
**दरमुदीर्य जगाम यथेप्सितम् ॥ ५३ ॥**

**वसतीति** । विबुधद्विषां असुराणाम् । दमयिता प्रहर्ता हरिः **वसुदेवसमुद्भवः** सन् । नन्दगृहे । वसति । अयमसौ इत्थभूतो हरिः ।

तव नाशयिता । इति । दर उदर्ये अल्प सारांशमुक्त्वा । 'दरोऽस्त्री शङ्खभीगर्तेष्वल्पार्थे त्वव्यय दरम्' इति यादवः । यथेप्सितम् ईप्सित-मनतिक्रम्य ईप्सित देशम् । जगाम । स्वरूपप्रकारपरामर्शितया अयं-मसावित्यनयोर्न पौनरुक्त्यम् ॥ ५३ ॥

मधुहिरण्यनिभो मधुरापति-
दिनहुताशनदीनदशां गतः ।
श्वसितजल्पितवेपितहुंकृतै-
ररतिमायतभीतिरसूचयत् ॥ ५४ ॥

**मध्विति** । मधुहिरण्यनिभः मधोर्हिरण्यस्य च असुरस्य तुल्यः । मधुरापतिः कंसः । दिनहुताशनस्य दीनां क्षीणां दशां निस्तेजस्कत्वरूपाम् । गतः तद्वचनश्रवणेन प्राप्तः । आयतभीतिः निरन्तरसतन्यमानभयश्च सन् । श्वसितेन उष्णनिश्वासेन जल्पितेन अन्यच्चिन्तितमन्यदापतितमित्यादिरूपेण वेपितेन कम्पेन हुकृतेन हुकारेण च । अरति निर्वेदम् । असूचयत्, श्वसितादिभिश्चास्य हृद्गतो निर्वेदः स्फुट आसीदित्यर्थः ॥

जडमतिः स जनार्दनमायया
विहसितस्त्रपया जनितव्यथः ।
अपकृतं वसुदेवममोचय-
द्दयितया सह दीनविलापया ॥ ५५ ॥

**जडेति** । जडमतिः मूढधीः । जनार्दनस्य मायया योगनिद्रया । विहसितः पादताडनादिना अपहसितः । त्रपया लज्जया । जनितव्यथः उत्पादितमनःपीडः । स कंसः । अपकृत वसुदेवम् । दीनविलापया कात-

रपरिदेवनशब्दया । दयितया देवक्या सह । अमोचयत् निरोधान्मोचयति स्म, अन्यत्रावतीर्णे परिपन्थिनि तन्निरोधं विफलं मत्वेति भावः ॥

**किमपि चिन्तितमागतमन्यथा**
**किमिदमित्यवशादुपजातया ।**
**विषविदूषितयेव मनीषया**
**मुहुरदूयत मोहविचेष्टितः ॥ ५६ ॥**

**किमपीति** । मोहविचेष्टितः मोहेन विचेष्टितः चेष्टां कारितः मोहप्रयुक्तसकलव्यापारः । चेष्टतेर्ण्यन्तात्कर्मणि क्तः । स कंसः । किमपि किञ्चित्कृत्यम् । चिन्तितं देवकीवसुदेवयोर्निरुद्धयोस्तदीया गर्भा उत्पत्त्यनन्तरमेव हन्तुं शक्यन्त इति चिन्तितम् । अन्यथा आगतं इदानीं नन्दकुले वसुदेवसुतो वसतीति प्रकारान्तरं प्राप्तम् । इदं किम् । इति अवशात् अनायत्तत्वेन । उपजातया । विषविदूषितयेव गरलदूषितयेव तापप्रदया । मनीषया बुद्ध्या । मुहुः अदूयत इत्थं विचिन्त्य पुनः पुनः पर्यतप्यतेत्यर्थः ॥ ५६ ॥

**अविषये विपदामसुरान्तके**
**पुनरियेष निकारपरम्पराम् ।**
**नियतिरेकपुखी दुरतिक्रमा**
**कृतधिया किमुताविलचेतसा ॥ ५७ ॥**

**अविषयेति** । विपदाम् । अविषये अगोचरे । असुरान्तके कृष्णे । पुनः । निकारपरम्परां अपकारपरम्पराम् । इयेष । 'निकारो विप्रकारः स्यात्' इत्यमरः । ननु तादृशे कथमपकर्तुमैच्छदित्यत आह—नियति-

रिति। एकमुखी एकस्मिन्कृत्ये मुख प्रारम्भो यस्याः सा, सदसद्वा फल दातुं प्रारब्धेति यावत्। नियतिः दैवम्। 'नियतिर्नियमे दैवे' इति विश्वः। कृतधिया बुद्धिमतापि। दुरतिक्रमा अतिक्रमितुमशक्या। आविलचेतसा किमु कलुषचेतसा दुरतिक्रमेति किमु वक्तव्यमित्यर्थः॥ ५७॥

**परिबभूव चुकोप विसिष्मिये**
**परिजहास हरिं प्रजगर्ज च।**
**परिणतेन भवान्तरवासना-**
**ग्रहगुणेन भजन्भवितव्यताम्॥ ५८॥**

**परिबभूवेति**। परिणतेन परिपक्केन। भवान्तरवासनाग्रहगुणेन जन्मान्तरवासनामयाग्रहरूपेण गुणेन, पूर्वजन्मवैरवासनानुबन्धेनेति यावत्। भवितव्यतां दुष्कर्मविपाकम्। भजन्। 'विपाको भवितव्यता' इति हलायुधः। परिबभूव हरिं चेतसा फल्गूचकार। चुकोप तस्मै कुप्यति स्म। विसिष्मिये देवकीवसुदेवाविह तयोः पुत्र उत्पद्य नन्दकुले वसतीति विस्मयते स्म। हरिं परिजहास मय्यप्यकारमिच्छतीति स्वबलावलेपात्परिहसति स्म। प्रजगर्ज च शौर्योन्मादात्प्रगर्जति स्म॥ ५८॥

**क्वचन धामनि कंसनिवेदिते**
**सभयमानकदुन्दुभिरावसत्।**
**स्मृतिगतेन सुतेन सजीविता**
**दिनशतानि निनाय च देवकी॥ ५९॥**

**क्वचनेति**। आनकदुन्दुभिः वसुदेवः। क्वचन धामनि कस्मिंश्चिद्गृहे। कंसनिवेदिते कंसेन निवेदिते सति। सभयं भयसहितं यथा तथा। आ-

वसत् तद्गृहमावसति स्म । देवकी च । स्मृतिं गतेन स्मृतिगोचरेण । सुतेन । सजीविता सप्राणा सती । दिनशतानि दिनानां शतानि बहूनि शतानि । निनाय अतिवाहयांबभूव ॥ ५९ ॥

**विगतकन्यकया च यशोदया**
**नियतिसंभृतनिर्भरनिद्रया ।**
**चिरसमागतजागरयान्तिके**
**हरिरपत्यमदृश्यत धन्यया ॥ ६० ॥**

**विगतेति** । विगतकन्यकया अपगतकन्यकया । नियतिसंभृतनिर्भरनिद्रया दैवसंपादितगाढनिद्रया । चिरसमागतजागरया चिरकालानन्तरमुपगतप्रबोधया । धन्यया पुण्यवत्या । यशोदया नन्दपत्न्या । अन्तिके समीपे । अपत्य हरिः । अदृश्यत दृश्यते स्म ॥ ६० ॥

**यदवबुद्धनिराकुलनीतिभि-**
**र्मुनिगणैरधुनापि विमृग्यते ।**
**तदिदमागममौलिविभूषणं**
**विधिवशादभवद्व्रजभूषणम् ॥ ६१ ॥**

**यदिति** । अवबुद्धनिराकुलनीतिभिः अवगतप्रतिष्ठितवेदार्थनिश्चायकन्यायैः । मुनिगणैः । अधुना इदानीमपि । यत् । विमृग्यते वेदान्तेष्वन्विष्यते । तदिदम् । आगममौलिविभूषण श्रुतिशिरसां प्रतिपाद्यत्वेनालंकारभूतं परं ब्रह्म । विधिवशात् नन्दादिभाग्यायत्ततया । 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' इत्यमरः । व्रजस्य गोकुलस्य विभूषणम् । अभवत् ॥ ६१ ॥

अनघवत्समनाकुलधेनुकं
प्रचुरदुग्धमचोरभयोद्भवम् ।
व्रजमनामयविश्वजनं विभुः
कृतयुगास्पदकल्पमकल्पयत् ॥ ६२ ॥

**अनघेति** । विभुः विष्णुः । व्रज गोकुलम् । अनघवत्सं व्याध्यादि-दुःखरहितवत्सम् । अनाकुलधेनुक तृणाद्यर्थमसम्भ्रान्तधेनुकम् । प्रचुरदुग्धं बहुक्षीरम् । अचोरभयोद्भव चोरभयोत्पत्तिरहितम् । अनामयविश्वजनं व्याधिरहितममस्तजनम् । अत एव, कृतयुगास्पदकल्प कृतयुगवासस्थानतुल्यम् । अकल्पयत । कृतवान् ॥ ६२ ॥

अजनि गोपगृहेषु मनोरमै-
रमितकान्तिभिरप्सरसां गणैः ।
यदनुभूतिरसेन समेष्यतः
शरणयादवशैशवयौवने ॥ ६३ ॥

**अजनीति** । मनोरमैः सुन्दरैः । अमितकान्तिभिः अपरिमितलावण्यैः । अप्सरसां स्वर्वेश्यानाम । गणैः । गोपानां नन्दव्रजवासिनां गृहेषु । अजनि जातम् । भावे लुङ् । यदनुभूतिरसेन यासामप्सरसामनुभवजन्येन सुखेन सह । शरणयादवस्य जगता रक्षितुर्यादवस्य कृष्णस्य । 'शरण गृहरक्षित्रोः' इत्यमरः । शैशवयौवने । समेष्यतः सगते भविष्यतः, तस्य शैशव ताभिः सह बालक्रीडानुभवजन्यसुखेन तस्य यौवन तत्सभोगसुखेन च समेष्यतीत्यर्थः । अत्र शैशवयौवनयोस्तत्सगमस्य काव्यनिर्माणात्प्राचीनत्वेऽपीह श्लोके समभिव्याहृतात्, अप्सरोजननात्पराचीनत्वात्तदपेक्षया समेष्यत इति भविष्यत्प्रयोगः । यथा कुमार-

संभवे 'अतन्द्रिता सा स्वयमेव वृक्षकान्घटस्तनी प्रस्नवनैरवर्धयत् । गुहोऽपि येषां प्रथमात्मजन्मनां न पुत्रवात्सल्यमपाकरिष्यति ॥' इति श्लोके समभिव्याहृतवृक्षसवर्धनात्पराचीनत्वमात्रेण नापाकरिष्यतीति भविष्यत्प्रयोगः ॥

सुरमहीसुरतोषणमादरा-
न्नवमुपादित नन्द उदारधीः ।
तरलगोपगणागमसंकुलं
तनयजन्ममहोत्सवमद्भुतम् ॥ ६४ ॥

**सुरेति** । उदारधीः महायशाः । नन्दः । सुरमहीसुरतोषण देवब्राह्मणानां तोषणम । तरलानां इतस्तत· सभ्रमतां गोपगणानां आगमेन आगमनेन सकुलम् । अद्भुत आश्चर्यभूतम् । नव इतः प्रागपुत्रतया इदप्रथमम् । तनयजन्ममहोत्सव पुत्रजन्मनि कर्तव्यं महोत्सवम् । आदरात् । उपादित उपादत्त स्म अकरोदित्यर्थः ॥ ६४ ॥

अधिचकार वदान्यमणेः श्रियं
व्यधित कल्पतरोरनुकल्पताम् ।
अजनयच्च सुतप्रसवोत्सवे
महति मेघविकत्थनमोघताम् ॥ ६५ ॥

**अधिचकारेति** । महति । सुतप्रसवोत्सवे पुत्रजन्मोत्सवे । वदान्यमणेः बहुप्रदस्य मणेः चिन्तारत्नस्य । 'स्युर्वदान्यस्थूललक्षदानशौण्डा बहुप्रदे' इत्यमरः । श्रिय शोभाम् । अधिचकार अधिकृतवान् जग्राहेत्यर्थः । कल्पतरोः अनुकल्पताम् । 'मुख्यः स्यात्प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः' इत्यमरः । व्यधित निधत्ते स्म । मेघविकत्थनमोघतां मेघश्लाघाया व्यर्थताम् । अजनयच्च । चिन्तामणिकल्पतरुकालमेघेभ्योऽप्यधिकमर्थिभ्यः प्रादादित्यर्थः ॥

निधिमनन्तमिव स्वयमुत्थितं
निरवधिं निजभागमिवोदितम् ।
व्रजभुवः प्रतिलभ्य रमापतिं
जहसुरैन्द्रमसारतरं पदम् ॥ ६६ ॥

**निधिमिति** । व्रजभुवः व्रजप्रभवा गोपाः । स्वय उत्थितं स्वयमेवोद्गतम् । अनन्तम् अन्तरहितम् । निधिं शेवधिमिव स्थितम् । उदितं मूर्ति परिगृह्य आविर्भूतम् । निरवधि निःसीमम् । निजभाग आत्मीयभाग्यमिव स्थितम् । 'भाग्यैकदेशयोर्भागः' इति रुद्रनिघण्टुः । 'भागो भाग्ये रूपकार्धे चतुर्थांशैकदेशयोः' इति रत्नमाला च । रमापति कृष्णम् । प्रतिलभ्य प्राप्य । आसारतर अत्यर्थ नि सारम् । ऐन्द्र पद स्वाराज्यम । जहसुः हसन्ति स्म । ऐन्द्रपदादप्यधिकं सुखमन्वभवन्नित्यर्थः ॥

पुत्रं प्रसूय तपसा पुरुषं पुराणं
कालं चिरं विधिवशात्कृतविप्रकर्षौ ।
शङ्काकलङ्कितधियावपि दम्पती तौ
तद्वैभवस्मरणशान्तरुजावभूताम् ॥ ६७ ॥

**पुत्रमिति** । पुराण पुरुष नारायणम् । तपसा । पुत्रम् । प्रसूय । चिर काल बहुकालम् । विधिवशात् दैववशात् । कृतविप्रकर्षौ कृतपुत्रविप्रकर्षौ । दम्पती देवकीवसुदेवौ । शङ्काकलङ्कितधियावपि शङ्कया कंसात्त्रासेन कलुषितधियावपि । 'शङ्कावितर्कभययोः' इति वैजयन्ती । तद्वैभवस्मरणेन तस्य स्वपुत्रस्य प्रभावस्मरणेन । शान्तरुजौ अपगतोपतापौ । अभूताम् । 'स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः' इत्यमरः ॥ ६७ ॥

नन्दसद्मनि नवेन्दुसंनिभौ
वासमेत्य वसुदेवनन्दनौ ।
वृद्धिमापतुरनेहसा स्वयं
स्वादुभोगजननीं सुपर्वणाम् ॥ ६८ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु यादवाभ्युदये महाकाव्ये
श्रीकृष्णस्य नन्दगृहप्राप्तिवर्णनं नाम
तृतीयः सर्गः ॥

**नन्देति** । नवेन्दुसंनिभौ । वसुदेवनन्दनौ रामकृष्णौ । नन्दसद्मनि नन्दगृहे । वासं एत्य वासं प्राप्य । अनेहसा कालेन । स्वयमेव सुपर्वणां देवानाम् । स्वादुभोगजननीं कंसादिवधद्वारा मधुरस्य स्वस्वपदभोगस्य जननीम् । वृद्धिम् । आपतुः । यथा चन्द्रः 'प्रथमां पिबते वह्निः' इत्यादिक्रमाद्देवानां स्वादुभोगजननीं वृद्धिं प्राप्नोति तद्वदित्यर्थः । कृष्णस्य वृद्धौ सत्यामनायासेन कंसादिवधाद्देवानां भोगसंपत्तिरित्याशयेन तद्वृद्धिः स्वयमेव भोगजननीत्युक्तम् । **रथोद्धता वृत्तम्** ॥ ६८ ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीविश्वजिद्याजि-
श्रीरङ्गराजाध्वरिवरसूनुना अप्पय्यदीक्षितेन
विरचिते यादवाभ्युदयव्याख्याने
**तृतीयः सर्गः** ॥

श्रीमते वेदान्तगुरवे नमः ।

## चतुर्थः सर्गः ।

मनीषितं कैतवमानुषस्य
श्रुत्वा भयक्रोधपरिप्लुतात्मा ।
कंसश्चिरं प्राग्भवकालनेमि-
श्चिन्तार्णवे मग्न इवावतस्थे ॥ १ ॥

**मनीषितमिति** । कैतवमानुषस्य कपटेन मानुषस्य श्रीकृष्णस्य । मनीषित स्ववधाभिप्रायम । श्रुत्वा नन्दतनयामुखादाकर्ण्य । भयक्रोधपरिप्लुतात्मा भयक्रोधयो कृतप्लवनान्तःकरणः । प्राग्भवकालनेमिः पूर्वजन्मनि कालनेमिरिति प्रसिद्धो भगवता हतोऽभूद्यः सः । कंसः । चिरम् । चिन्तार्णवे मग्न इवावतस्थे, उपस्थितविपत्प्रतीकारचिन्तास्तिमितश्चिरमवतस्थे इत्यर्थः । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । अपारकरुणासमुद्राद्भगवतः किमिति भेतव्यम् । शरणागतिमात्रेण तत्प्रसादनसंभवादित्यत उक्त क्रोधेति । क्रोधनिमित्त पूर्वजन्मवासनेति सूचितं प्राग्भवकालनेमिरिति । चिन्तार्णवे मग्न इवावतस्थ इत्यत्र **रूपकसंकीर्णोत्प्रेक्षालङ्कारः** ॥ १ ॥

स दुर्दमानासुरसत्त्वभेदा-
न्नेता समाहूय नृशंसचेताः ।
प्रस्थापयामास परैरधृष्यं
नन्दास्पदं नाथविहारगुप्तम ॥ २ ॥

**स इति**। सः इत्थं चिन्तां प्राप्य स्थितः। नृशंसचेताः क्रूरान्तः-करणः। नेता प्रभुः कंसः। दुर्दमान् कृच्छ्रदमनान्। 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति खल्प्रत्ययः। आसुरसत्त्वभेदान् आसुरान्प्राणिविशेषान्। समाहूय। नाथस्य कृष्णस्य विहारेण क्रीडया गुप्तम्। अत एव, परैः अरिभिः अधृष्यम्। नन्दस्यास्पद स्थानं प्रति। प्रस्थापयामास। प्रौढिम्नि सत्यनाधृष्यो भवेत्कृष्ण, ततः शैशव एवात्र कश्चिदुपायः प्रयोजनीय इत्यभिप्रायेणेति भावः। आसुरशब्दस्य प्रज्ञादिपाठात्स्वार्थिकेऽणि आदिवृद्धिः॥ २॥

**कदाचिदन्तर्हितपूतनात्मा**
**कंसप्रयुक्ता किल कापि माया।**
**निद्रापराधीनजने निशीथे**
**व्रजं यशोदाकृतिराविवेश॥ ३॥**

**कदाचिदिति**। कदाचित् एकदा। कंसप्रयुक्ता कापि माया, कंसप्रयुक्तानामसुरभेदानां मध्ये काचित्पूतनाख्या माया शाम्बरी। अन्तर्हितपूतनात्मा तिरोहितपूतनाख्यनिजस्वरूपा। यशोदाया आकृतिरिव आकृतिर्यस्याः सा तथाभूता सती। निद्रापराधीनजने निद्रापरतन्त्रो जनो यस्मिंस्तस्मिन्। निशीथे अर्धरात्रे। व्रजं नन्दस्य गोकुलम्। आविवेश प्रविवेशेत्यर्थः॥ ३॥

**स्तन्येन कृष्णः सह पूतनायाः**
**प्राणान्पपौ लुप्तपुनर्भवायाः।**
**यदद्भुतं भावयतां जनानां**
**स्तनंधयत्वं न पुनर्बभूव॥ ४॥**

**स्तन्येनेति**। कृष्णः लुप्तपुनर्भवायाः। नष्टपुनर्जननायाः। पूतनायाः पूतनाख्यमायायाः। स्तन्येन सह प्राणान् पपौ, विषरूपस्तन्यपानकाल एव प्राणानपि जहारेत्यर्थः। अद्भुतम् आश्चर्यभूतम्। यत् भगवतः पूतनास्तन्यपानम्। भावयतां ध्यायताम। जनानां भक्तानाम्। पुनः। स्तनंधयत्वं स्तन धयति पिबतीति स्तनंधयः। 'नासिकास्तनयोर्ध्माधेटोः' इति खप्रत्ययः। 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः। तस्य भावः स्तनंधयत्वम्। न बभूव। भगवद्ध्यानस्य मुक्तिप्रदतया पुनर्जननाभावादिति भावः। अत्र पूर्वार्धे पपावित्येतस्मात्सहोक्तिबलात्पानापहरणरूपार्थद्वयप्रतीतिरिति **सहोक्तिरलङ्कारः**। उत्तरार्धे अनर्थप्राप्तिलक्षणो **विषमालङ्कारः**। भावना हि भावयितुर्भाव्यमानत्वप्राप्तिहेतुः। यथा-क्रतुरस्मिँल्लोके पुरुषो भवति एवमितः प्रेत्य भवतीत्यादिश्रुतेः। अत्र भगवतः स्तन्यपानभावनया भावयितुरधिकस्तन्यपानलाभ आस्ताम्। तस्य स्वत एव जन्मान्तरभावि स्तन्यपानमपि लुप्यत इत्यनर्थोत्पत्तिः। इय चानर्थोत्पत्तिरूपा निन्दा ध्यानमात्रेण मुक्तिप्रदत्वरूपायां भगवत्स्तुतौ पर्यवस्यतीति **व्याजस्तुत्यलङ्कारः** ॥ ४ ॥

**निशम्य तस्याः परुषं निनादं**
**रूक्षं यशोदा रुदितं च सूनोः।**
**ससंभ्रमावेगमुपेत्य भीता**
**तमग्रहीद्दुर्ग्रहमागमानाम् ॥ ५ ॥**

**निशम्येति**। यशोदा नन्दपत्नी। तस्याः भगवत्पीयमानप्राणायाः। परुषं निनादं श्रुतिकठोरं घोषम्। तदनु सूनोः तदङ्कशयितस्य। रूक्ष रुदितं तद्भयाभिनयनायोच्चैः क्रियमाणतया परुषं रोदन च। निशम्य

श्रुत्वा । भीता सती । ससंभ्रमावेगं संभ्रमो बहिस्त्वरा आवेगः तद्धेतुर-निष्टशब्दश्रवणकृतो मनोविकारः तदुभयसहितं यथा तथा । उपेत्य प्राप्य । आगमानां वेदानाम् । दुर्ग्रहं दुरवगाहम् । तम् । अग्रहीत् तदङ्कात् गृहीतवतीत्यर्थः ॥ ५ ॥

नन्दश्च तीव्रेण भयेन सद्यः
समेत्य पश्यन्ननघं कुमारम् ।
तेनैव तस्य त्रिजगन्नियन्तुः
प्रायुङ्क्त रक्षां परमार्थवेदी ॥ ६ ॥

**नन्दश्चेति** । परमार्थवेदी भगवानेव सर्वस्य रक्षक इति परममर्थमवगच्छन् । नन्दश्च । तीव्रेण उत्कटेन । भयेन । सद्यः तदैव । समेत्य । अनघं पूर्ववदेव कुशलिनम् । कुमारम् । पश्यन्सन् । त्रिजगन्नियन्तुः त्रिलोकनायकस्य । तस्य । तेनैव रक्षां प्रायुङ्क्त । 'रक्षतु त्वामशेषाणां भूतानां प्रभवो हरिः । यस्य नाभिसमुद्भूतपङ्कजादभवज्जगत्' इत्यादिना भगवन्तमेव रक्षकमनुसन्धाय रक्षां प्रयुक्तवानित्यर्थः । 'उभयप्राप्तौ कर्मणि' इति षष्ठीनियमात्तेनेति कर्तरि तृतीया ॥ ६ ॥

गोपाश्च संभूय गुहोपमास्यां
स्वघोषनिर्ह्रादितविश्वघोषाम् ।
गतासुमैक्षन्त निशाचरीं तां
भीमाकृतिं भीमरथीमिवान्याम् ॥ ७ ॥

**गोपाश्चेति** । गोपाश्च । संभूय मिलित्वा । स्वघोषेण स्वशब्देन निर्ह्रादितः सशब्दीकृतः विश्वः कृत्स्नः घोषः आभीरग्रामः यया ताम् ।

निर्ह्रादितेति निस्पूर्वात् 'ह्राद अव्यक्ते शब्दे' इति धातोः ण्यन्तात्कर्मणि क्तः। गतासुं घोषणानन्तरमुत्क्रान्तप्राणाम्। गुहोपमाक्षीं स्वयं विकृताकारतया गतासुतया च गुहानिभलोचनाम्। भीमाकृतिं भयकररूपाम्। अत एव, अन्यां भैमरथीमिव स्थिताम्। 'सप्तत्याः सप्तमे वर्षे सप्तमे मासि सप्तमी। रात्रिर्भीमरथी नाम सर्वप्राणिभयङ्करी॥' इत्युक्तलक्षणां प्राणिनां गण्डभूतरात्रिमिव स्थिताम्। निशाचरीम्। ऐक्षन्त अपश्यन्॥

**परश्वधैस्तत्क्षणशातितैस्तां**
**विच्छिद्य विन्ध्याचलसानुकल्पाम्।**
**अनःप्रवृत्त्या बहिराशु निन्युः**
**क्रव्याद्बलिं प्राज्यमिव क्षिपन्तः॥ ८॥**

**परश्वधैरिति**॥ विन्ध्याचलसानुकल्पां विन्ध्यपर्वतप्रस्थसदृशीं तथातिशयितमहाकायाम्। 'स्नुः प्रस्थः सानुरस्त्रियाम्' इत्यमरः। तां पूतनाम्। तत्क्षणशातितैः तत्क्षणे उत्तेजितैः, तदङ्गानामतिकठिनत्वादिति भावः। परश्वधैः परशुभिः। विच्छिद्य खण्डयित्वा। अनःप्रवृत्त्या शकटस्य प्रवर्तनेन। आशु शीघ्रम्। घोषात् बहिः। प्राज्यं बहुलम्। क्रव्याद्बलिं क्रव्यादः मांसभक्षाः गृध्रगोमायुप्रभृतय.। 'आममांसभक्षः क्रव्यात्' इति काशिका। तेभ्यः बलि उपहारम्। 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः' इति समासः। क्षिपन्तः प्रयच्छन्त इव। निन्युः नयन्ति स्म। 'वृतुधातुरन्तर्भावितण्यन्ततया सकर्मकोऽपि' इति प्रवृत्तिशब्दस्य प्रवर्तनवाचिता॥ ८॥

**ग्रहादिदोषानपहन्तुकामा**
**गोप्तुः सतां गोपतयः समेताः।**

**सुवर्णसूत्रग्रथिताभिरामां**
**पञ्चायुधीमाभरणं बबन्धुः ॥ ९ ॥**

**प्रह्लादीति** । सतां साधूनाम् । गोप्तुः रक्षकस्य भगवत. । प्रह्लादि-दोषान् बालग्रहमातालिप्रभृतीन् शिशुदोषान् । अपहन्तुकामाः अपनेतुं कामयमानाः । 'लुम्पेदवश्यमः कृत्ये तुकाममनसोरपि' इति समासे मलोप· । मयूरव्यसकादित्वात्समासः । समेताः मिलिताः । गोपतयः । सुवर्णसूत्रग्रथिताभिरामां सुवर्णस्य सूत्रमिति सबन्धसामान्ये षष्ठी, सुवर्णमय सूत्रमिति यावत्, तेन ग्रथितं ग्रथन तेन अभिरामा मनोज्ञाम् । पञ्चायुधी पञ्चानां शङ्खचक्रादीनां भगवदायुधानां समाहारम् । आभरण बबन्धुः । पञ्चायुधाभरणधारण बालानां दोषनिवारणार्थम्, "जातस्य पञ्चमदिने शुभदे मुहूर्ते पञ्चायुधाभरणधारणमिष्टमाहुः" इति वचनादित्याहुः ॥ ९ ॥

**रम्याणि रत्नानि रथाङ्गपाणे-**
**राकल्पतां नूनमवाप्नुवन्ति ।**
**तदङ्गसंस्पर्शरसात्प्रकामं**
**रोमाञ्चितान्यंशुगणैरभूवन् ॥ १० ॥**

**रम्याणीति** । रथाङ्ग चक्र पाणौ यस्य तस्य रथाङ्गपाणे. । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ' इति परनिपातः। आभरणतां आभरणत्वम् । आप्नुवन्ति वहमानानि । रम्याणि । रत्नानि । नूनम् । तदङ्गसस्पर्शरसात् भगवदङ्गसंस्पर्शन यत्सुख तस्मात् । अंशुगणैः किरणसमूहैः । प्रकामम् । रोमाञ्चितानि सजातरोमाञ्चानि । अभूवन् । अत्रांशुगणेषु रोमाञ्चत्वारोपाद्रूपकं तदङ्गसंस्पर्शरसादिति हेतूत्प्रेक्षा चेति संकरः ॥ १० ॥

स शायितः क्षेमविदा जनन्या
पर्यङ्किकायां प्ररुदन्कुमारः ।
चिक्षेप तुङ्गं शकटं पदाभ्यां
गाढाभिघातेन गिरीन्द्रसारम् ॥ ११ ॥

**स इति** । क्षेम लब्धस्य कुमारस्य संरक्षणं वेत्तीति क्षेमवित् । तया । 'क्षेमः स्यान्मङ्गले लब्धरक्षणे चोरकेऽपि च' इति विश्वः । जनन्या मात्रा । पर्यङ्किकायां कुमारोचिते पर्यङ्के । शायितः । कुमारः कृष्णः । प्ररुदन्सन् । गिरीन्द्रस्य सारो बलं यस्य तत् गिरीन्द्रसारम् । 'सारो बले मज्जनि च स्थिरांशे' इति विश्वः । तुङ्गं उन्नतम् । शकटम् । पदाभ्यां गाढाभिघातेन रोदनप्रयुक्तपादचलनापदेशकृतेन दृढताडनेन । चिक्षेप क्षिपति स्म । पर्यङ्कशब्दात् 'अल्पे' इत्यल्पार्थे कन्प्रत्ययः । अल्पत्वविवक्षयैव 'स्त्री स्यात्काचिन्मृणाल्यादिविवक्षापचये यदि' इति स्त्रीत्वेन टाप् । ततः 'प्रत्ययस्थात्कात्पूर्वस्य' इत्यादिना अकारस्य इकारः ॥ ११ ॥

विदारितस्तस्य पदाग्रयोगा-
द्विकीर्यमाणो बहुधा पृथिव्याम् ।
शब्दायमानः शकटाख्यदैत्यः
संक्षोभयामास जगन्त्यभीक्ष्णम् ॥ १२ ॥

**विदारित इति** । तस्य कृष्णस्य । पदाग्रयोगात् चरणाग्रसंपर्काद्धेतोः । विदारितः संजातविदारः । अत एव, पृथिव्याम् । बहुधा । विकीर्यमाणः स्वयमेव कीर्णो भवन् । शब्दायमानः शब्दं कुर्वन् । 'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे' इति कृञर्थे क्यङ् । शकटाख्यः शकटा-

भिधानो दैत्यः । जगन्ति । अभीक्ष्णं भृशम् । संक्षोभयामास अत्युग्रेण दलनपतनघोषेण भीतान्यकरोत् । 'कश्चिद्दनोः सुतो वीरः कृष्णस्य वधकाङ्क्षया । नन्दस्य प्रियतामायाच्छाकटं वपुरुद्वहन् ॥' इति नन्दशकटस्यासुररूपत्वमुक्तं हरिवंशे ॥ १२ ॥

यदृच्छयोत्क्षिप्तपदे कुमारे
शैलोपलक्ष्ये शकटे निरस्ते ।
सरोजगर्भोपमसौकुमार्यं
पस्पर्श तत्पादतलं यशोदा ॥ १३ ॥

**यदृच्छयेति** । कुमारे । यदृच्छया स्वेच्छया । 'स्वेच्छा यदृच्छा स्वच्छन्दस्वैरिता चेरिता. समाः' इति केशवः । उत्क्षिप्तपदे ऊर्ध्वं क्षिप्तचरणे । शैलोपलक्ष्ये पर्वतवद्दृश्ये तद्वन्महति । शकटे । निरस्ते सति । यशोदा । सरोजगर्भोपमसौकुमार्यं अरविन्दाभ्यन्तरमार्दवम् । सरोजगर्भशब्देन योग्यतावशात्तत्सौकुमार्यं लक्षणीयम् । तत्पादतलं कुमारस्य चरणयोरधःप्रदेशम् । पस्पर्श, शकटताडनाभिहतिवेदनाशङ्कयेति भावः । 'तलं स्वरूपाधरयोः' इति विश्वः ॥ १३ ॥

अथाङ्गणे जानुपदाग्रहस्तै-
श्चक्रायुधे चङ्क्रमणप्रवृत्ते ।
प्रायो धरित्री परिषस्वजे तं
सापत्रपा सान्द्ररजश्छलेन ॥ १४ ॥

**अथेति** । अथ अतिशैशवापगमानन्तरम् । चक्रायुधे कृष्णे । जानुपदाग्रहस्तैः जानुनी च पदाग्रे च हस्तौ च तैः । अवयवानां षट्त्वसंख्यात्र

विवक्षिता, तैः षड्भिर्विना चङ्क्रमणासभवात् । अत एव न प्राण्यङ्गलक्षण एकवद्भावः, 'अधिकरणैतावत्वे च' इति वृत्तिपदार्थसख्याविवक्षायां निषेधात् । अङ्गणे अजिरे । चक्रमणप्रवृत्ते चक्रमणमितस्ततः सचारः क्रमिधातोः 'नित्यं कौटिल्ये गतौ' इति यङन्तात् ल्युट् । तत्र प्रवृत्ते सति । धरित्री धरणी देवस्य महिषी । सापत्रपा परेभ्यो लज्जायुक्ता सती । सान्द्ररजश्छलेन गाढाङ्गणरजोव्याजेन । प्रायः नूनम् । परिषस्वजे आलिलिङ्ग । पांसुमये गृहाङ्गणे चक्रमणाद्धूसरभाव एव धरित्र्यालिङ्गनत्वेनोत्प्रेक्ष्यते । तत्र च सान्द्ररजश्छलेनेत्यपह्नुतिरिति **सापह्नवोत्प्रेक्षालङ्कारः** ॥ १४ ॥

> **निर्व्याजमन्दस्मितदर्शनीयं**
> **नीराजितं कुण्डलरत्नभासा ।**
> **नन्दस्तदानीं न जगाम तृप्तिं**
> **मुग्धाक्षरं प्रेक्ष्य मुखं तदीयम् ॥ १५ ॥**

**निर्व्याजेति** । नन्दः । तदानीं कृष्णस्य बाल्यसमये । निर्व्याजेन निरुपाधिकेन स्वभावसिद्धेन मन्दस्मितेन दर्शनीयम् । 'दर्शनीय तदानन्दसान्द्रो यत्र मनोलयः' इति यादवः । कुण्डलरत्नभासा । नीराजित कृतनीराजन परितो विद्योतितमिति यावत् । मुग्धानि शैशवकलानि अक्षराणि यस्य तत् । तदीय तस्य कृष्णस्येदम् । मुखम् । प्रेक्ष्य । तृप्तिं न जगाम ॥ १५ ॥

> **विश्वानि विश्वाधिकशक्तिरेको**
> **नामानि रूपाणि च निर्मिमाणः ।**

**नामैकदेशग्रहणेऽपि मातु-**
**र्बभूव कृष्णो बहुमानपात्रम् ॥ १६ ॥**

**विश्वानीति** । विश्वाधिकशक्तिः विश्वस्माद्ब्रह्मादिप्रपञ्चात् अधिका शक्तिर्यस्य सः । एकः सहायनिरपेक्ष एव । विश्वानि कृत्स्नानि । नामानि अभिधानानि । रूपाणि अभिधेयानि च । निर्मिमाणः 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इत्युपनिषदुक्तप्रक्रियया प्रतिसर्गं सृजन् । कृष्णः । मातुः यशोदायाः । नामैकदेशग्रहणेऽपि शैशवात्साकल्येन वक्तुमशक्त्यभिनयेन नामैकदेशोच्चारणेऽपि । बहुमानपात्रं बभूव अहो मातुर्नाम गृह्णातीति वात्सल्यवतां बन्धूनां श्लाघाविषयोऽभूदित्यर्थः । अत्र **विभावनाविशेषोक्त्योः सन्देहसङ्करः** । कारणाभावे कार्योत्पत्तिर्विभावना । कारणसामग्र्ये कार्यानुत्पत्तिरूपा विशेषोक्तिः । तत्र बहुमानकारणाभावो बहुमानकारणविरुद्धविश्वाधिकशक्तित्वाभिधानमुखेन निबद्ध इति बहुमानकारणाभावेऽपि बहुमानोत्पत्तिरूपा विभावना विवक्षिता, उत अबहुमानकारणसामग्र्येऽपि तदनुत्पत्तिरूपा विशेषोक्तिस्तद्विरुद्धबहुमानोत्पत्तिमुखेन विवक्षितेति निर्णायकाभावात्सन्देहसङ्करः ॥ १६ ॥

**तरङ्गितानुश्रवगन्धमादौ**
**तस्याद्भुतं संलपितं सखीभिः ।**
**वर्णस्वरादिव्यवसायभूम्ना**
**शिक्षाविदां शिक्षणमग्र्यमासीत् ॥ १७ ॥**

**तरङ्गितेति** । तस्य कृष्णस्य । आदौ प्रथमसंलापसमय एव ।

तरङ्गितः सञ्जाततरङ्गः उद्भूतः अनुश्रवस्य वेदस्य गन्धो यस्मिंस्तत् सर्वत्र वेदच्छायासस्पर्शीत्यर्थः । वेदस्य परभागवत्तासूचकमिदं विशेषणम् । 'निगमो वेद आम्नाय आगमानुश्रवावपि' इति रत्नाकरः । अत्र एव अद्भुत आश्चर्यम । सखीभि संलपित अप्सरोवताररूपाभिः सह सलापः । 'यदनुभूतिरसेन समंग्यत शरणमादवशैशवयौवने' इति तृतीयसर्गोक्तरीत्या प्रथमसलापमारभ्य गोपकुमारिकाभि. सहैव क्रीडति व्यञ्जयितु सखीभिरिति विशेषणम् । वर्णस्वरादिव्यवसायभूम्ना वर्णा अकारादयः स्वरा उदात्तादय आदिशब्देन मात्रादयो गृह्यन्ते तेषा व्यवसायो निश्चयः व्यक्ततेति यावत्, तस्य भूम्ना प्रचयेन । शिक्षाविदा शिक्षानाम वर्णानां स्थानकरणप्रयत्नादिबोधको वेदाङ्गविशेषः, तदभिज्ञानाम् । अग्र्य मुख्यम् । शिक्षणं आसीत् । एव स्वरवर्णाद्यभिव्यक्त्या वेदोच्चारण कर्तव्यमिति लक्षणज्ञानामपि शिक्षाकरमभवदित्यर्थः ॥ १७ ॥

**तमीषदुत्थाय निलीनमारा-**
**त्संप्रेक्ष्यदन्ताङ्कुरचारुहासम् ।**
**सनातनीं दृष्टिमनन्यदृष्टिः**
**सानन्दमालोकत नन्दपत्नी ॥ १८ ॥**

**तमिति** । नन्दपत्नी यशोदा । ईषत् उत्थाय । आरात् समीपे । निलीन पुनरप्यशक्त्यभिनयेनोपविष्टम् । सम्प्रेक्ष्यैः दृश्यैः दन्तानां अङ्कुरैः चारुहासम् । सनातनीं दृष्टि लोकानामनपायिदृष्टिरूप, दृष्टिवत्सदा प्रकाशकत्वात्प्रियत्वाच्च । 'चक्षुर्देवानामुत मर्त्याना'मिति श्रुतिः । तं कृष्णम् । अनन्यदृष्टिः अन्यनिरपेक्षदृष्टिः सती । सानन्द आलोकत सप्रमोदमपश्यत् । अनन्येति नैरपेक्ष्यार्थकनञ्समासः ॥ १८ ॥

पदैस्त्रिभिः क्रान्तजगत्त्रयं तं
भव्याशया भावितबालभावम् ।
करेण संगृह्य कराम्बुजाग्रं
संचारयामास शनैर्यशोदा ॥ १९ ॥

**पदैरिति** । भव्याशया शुभचित्ता कुमारस्य क्षेमार्थिनी । यशोदा । त्रिभिः । पदैः चरणविन्यासैः । क्रान्तजगत्त्रयं आक्रान्तलोकत्रयम् । तथा भावितबालभावं अभिनीतबाल्यम् । तं देवम् । करेण स्वहस्तेन । कराम्बुजाग्रं तस्य करः अम्बुजमिव तस्याग्रमङ्गुलीप्रदेशम् । संगृह्य गृहीत्वा । शनैः संचारयामास, क्रमेणाभ्यासाय मन्दं संचारयति स्म ॥ १९ ॥

स्खलद्गतिं द्वित्रपदप्रचारा-
ज्जानुक्रमे जातरुचिं कुमारम् ।
भुग्ने समावेश्य वलग्नभागे
स्तन्यं मुदा पाययते स्म धन्या ॥ २० ॥

**स्खलदिति** । धन्या सुकृतिनी यशोदा । द्वित्रपदप्रचारात् द्वे वा त्रीणि वा मानं येषां तानि द्वित्राणि । 'संख्ययाव्ययासन्ना—' इत्यादिना समासः । 'बहुव्रीहौ संख्येये डजबहुगणात्' इति डच्समासान्तः । द्वित्राणि पदानि प्रचारः । अत्यन्तसंयोगे द्वितीया । "द्वितीया" इति योगविभागात्समासः । तस्माद्धेतोः । स्खलद्गतिम् । अत एव, जानुक्रमे जानुक्रमणे । जातरुचिं कुमारम् । भुग्ने अवनते । वलग्नभागे । समावेश्य मुदा । स्तन्यं पाययते स्म, पादप्रचारश्रान्त्यपनयायेति भावः । 'लट् स्मे' इति भूते लट् । **स्वभावोक्तिरलङ्कारः** ॥ २० ॥

क्रमेण भूयोऽपि विहारकाङ्क्षी
नन्दस्य दारैरभिनन्द्यमानः ।
नित्यानुभूतं निगमान्तभृङ्गै-
र्निजं पदाब्जं निदधे पृथिव्याम् ॥ २१ ॥

**क्रमेणेति** । भूयोऽपि स्तन्यपानानन्तर पुनरपि । विहारकाङ्क्षी क्रीडामाकाङ्क्षमाणः । नन्दस्य दारैः यशोदया । 'दाराः पुसि च भूम्न्येव' इति पुलिङ्गता बहुवचनान्तत्व च । अभिनन्द्यमानः उत्साहजननाय श्लाघ्यमान देवः । निगमान्ता एव भृङ्गाः तैः । नित्यानुभूत नित्यमनुभुक्तं तत्तात्पर्यमिति यावत् । निज आत्मीयम् । पदाब्जम् । क्रमेण । पृथिव्यां निदधे, यशोदया जनितोत्साहः स्वयमेवोत्थाय स्थित इत्यर्थः ॥

स संचरन्साधुजनप्रतीपै-
र्मा भुज्यतां सेयमितीव मत्वा ।
चक्रादिभिः पादसरोजचिह्नै-
रामुद्रयामास महीमनन्यैः ॥ २२ ॥

**स इति** । सचरन् गृहाङ्गणभूमौ पर्यटन् । स देवः । सा भगवत्सबन्धित्वेन प्रसिद्धा । इय भूमि । साधुजनप्रतीपैः सात्त्विकजनविपरीतैः । मा भुज्यताम् । इति मत्वेव । अनन्यैः अन्यः आश्रयो नास्ति येषां तैः सात्त्विकेतरसाधारण्यरहितैः । पादसरोजचिह्नैः । चक्रादिभिः । महीम् । आमुद्रयामास समन्तान्मुद्रावतीं चकार । यथा गृहारामादिषु ब्राह्मणादिभोग्यत्वसूचनाय तत्तदसाधारणदण्डकमण्डल्वादिमुद्रां कुर्वन्ति तद्वदिति भावः । **हेतूत्प्रेक्षा** ॥ २२ ॥

**आलम्ब्य मातुः करपल्लवाग्रं**
**शनैः शनैः संचरतो मुरारेः ।**
**बभार चित्रामिव पत्ररेखां**
**धन्या पदन्यासमयीं धरित्री ॥ २३ ॥**

**आलम्ब्येति** । धन्या सुकृतिनी । धरित्री । मातुः यशोदायाः । करपल्लवयोः । अग्रम् । आलम्ब्य । शनैः शनैः । सचरतः । मुरारेः कृष्णस्य । पदन्यासमयीं चरणविक्षेपरूपाम् । चित्रामिव नानाविधमकराद्याकृतियुक्ताम् । पत्ररेखाम् । बभार । इवशब्दो वाक्यालकारे 'आवर्जिता किंचिदिव स्तन्याभ्याम्' इत्यादाविव ॥ २३ ॥

**अकर्मनिघ्नो भुवनान्यजस्रं**
**संकल्पलेशेन नियम्य दीव्यन् ।**
**प्रचारितः प्रस्नुतया जनन्या**
**पदे पदे विश्रममाचकाङ्क्ष ॥ २४ ॥**

**अकर्मेति** । अकर्मनिघ्नः अकर्माधीन. । सकल्पलेशेन सकल्पमात्रेण । भुवनानि । नियम्य व्यवस्थाप्य । अजस्रं सदा । दीव्यन् क्रीडन् । सः । प्रस्नुतया वात्सल्येन स्तनप्रस्नवयुक्तया । जनन्या । प्रचारितः सचारितः सन् । पदे पदे प्रतिपदम् । विश्रम विश्रान्तिम् । आचकाङ्क्ष आकाङ्क्षति स्म । अत्रापि 'विश्राधिकशक्तिरेकः' इति श्लोक इव **विभावनाविशेषोक्त्योः सन्देहसङ्करः** ॥ २४ ॥

**सुरप्रसूनैः सुरभीकृताना-**
**मारोहणान्यङ्गणवेदिकानाम् ।**

तमारुरुक्षुं तरलाङ्घ्रिपद्मं
धातारमारोहयदाशु धात्री ॥ २५ ॥

**सुरप्रसूनैरिति** । सुराणां प्रसूनैः कल्पवृक्षपुष्पैः । सुरभीकृतानाम् । अङ्गणवेदिकानां अङ्गणेषु निर्मितानां वेदिकानाम् । आरोहणानि सोपानानि । 'आरोहण स्यात्सोपाने समारोहे प्ररोहणे' इति विश्वः । आरुरुक्षु आरोढुमिच्छुम् । अत एव, तरलाङ्घ्रिपद्म चञ्चलपादकमलम् । धातार जगता स्रष्टार भगवन्तम् । धात्री माता यशोदा, उपमाता वा काचित् । 'धात्री जनन्यामलक्यांवसुमत्युपमातृषु' इति विश्वः । आशु शीघ्रम् । आरोहयत् आरोहयति स्म । अत्र चारु बालस्वभाववर्णनात्स्वभावोक्तिरलङ्कारः ॥ २५ ॥

तलेषु तस्याङ्गणपादपानां
तालानुकूलेषु गतागतेषु ।
व्रजस्थिताः स्वर्गसदामशृण्व-
न्दूरोदितान्दुन्दुभितूर्यनादान् ॥ २६ ॥

**तलेष्विति** । व्रजस्थिता गोपा गोप्यश्च । अङ्गणपादपानां तलेषु चत्वरवृक्षाणामधःप्रदेशेषु अधिकरणेषु । तालानुकूलेषु स्वकीयकरतालानुकूलेषु । तस्य कृष्णस्य । गतागतेषु गमनागमनेषु सत्सु । बालाः खलु आह्वानार्थबन्धुजनकृतकरतालानुरोधेन गतागतानि कुर्वन्ति । दूरे अभ्रमार्गे उदितान् उत्पन्नान् । स्वर्गसदा देवानां कृष्णस्य गतागताभ्यासदर्शनेन देवकार्यसिद्धेर्नेदीयस्त्वबुद्ध्या सतुष्टानाम् । दुन्दुभितूर्यनादान् भेरीवाद्यशब्दान् । अशृण्वन् ॥ २६ ॥

**य एष लोकत्रयसूत्रधारः**
**पर्यायपात्राणि चराचराणि ।**
**आनर्तयत्यद्भुतचेष्टितोऽसौ**
**ननर्त खेलं नवनीतकाङ्क्षी ॥ २७ ॥**

**य एष इति** । लोकत्रयस्य सूत्रधारः नर्तयिता । य एषः । पर्यायपात्राणि क्रमेण नर्तकरूपतां प्राप्तानि । चराचराणि स्थावरजङ्गमानि । आनर्तयति । अद्भुतचेष्टितः आश्चर्यचरित्रः । असौ कृष्णः । नवनीतकाङ्क्षी सन् । आभीक्ष्ण्ये णिनिः । खेलं सुन्दरं यथा तथा । ननर्त । नर्तनं दृष्ट्वा गोप्यो नवनीतं प्रयच्छन्तीति तदर्थं नृत्यति स्म ॥ २७ ॥

**गृहेषु दध्नो मथनप्रवृत्तौ**
**पृषत्कणैरुत्पतितैः प्रकीर्णः ।**
**निदर्शयामास निजामवस्थां**
**प्राचीं सुधाशीकरयोगचित्राम् ॥ २८ ॥**

**गृहेष्विति** । गृहेषु स्वगृहे अन्येषु बन्धुगृहेषु च । दध्नः । मथनस्य प्रवृत्तौ । उत्पतितैः उत्थितैः । पृषत्कणैः दधिबिन्दुलेशैः । प्रकीर्णः अवकीर्णः, नवनीतादरेण समीपेऽवस्थानादिति भावः । कृष्णः । सुधाशीकरयोगचित्रां अमृतकणसंपर्केण कर्बुराम् । प्राचीं अमृतमथनकालीनाम् । निजाम् । अवस्थां दशाम् । निदर्शयामास प्रदर्शयति स्म, तद्दशायामेव स्थितोऽस्मीति दर्शितवानित्यर्थः । निदर्शयामास स्वात्मना दृष्टान्तीकृतवानिति वा । आद्यपक्षे अवयवेषु दधिबिन्दुविसरेण अमृतमथनावस्था दर्शितेति प्रकृतक्रियया अशक्यवस्त्वन्तरकरणात्मा **विशेषालङ्कारः** । द्वितीयपक्षे **उपमा** ॥ २८ ॥

त्रस्यन्मुकुन्दो नवनीतचौर्या-
न्निर्भुग्नगात्रो निभृतं शयानः ।
निजानि निःशब्ददशां ययाचे
बद्धाञ्जलिं बालविभूषणानि ॥ २९ ॥

**त्रस्यन्निति** । नवनीतचौर्याद्धेतोः । त्रस्यन् गोपिकाभ्यो बिभ्यत् । निर्भुग्नगात्रः निभृतं शयानः, नवनीतशून्यं भाण्डं दृष्ट्वा मामन्विष्य गोपिका मा द्राक्षुरिति सङ्कुचितगात्रः क्वचिद्गृहकोणे निःशब्दं शयानः । मुकुन्दः । निजानि । बालविभूषणानि । अञ्जलिं बद्ध्वा । निःशब्ददशां ययाचे, धूतान्यपि निःशब्दानि भवन्त्विति साञ्जलिबन्धः प्रार्थितवानित्यर्थः । याचतियोगात 'अकथितं च' इति भूषणानां कर्मत्वम् ॥ २९ ॥

आरण्यकानां प्रभवः फलाना-
मरण्यजातानि फलान्यभीप्सन् ।
विस्रंसिधान्याञ्जलिना करेण
व्याधात्मजां विश्वपतिः सिषेवे ॥ ३० ॥

**आरण्यकानामिति** । अरण्यसबन्धिनोऽध्याया उपनिषद्भागा आरण्यकाः ते ह्यरण्येऽध्येयाः । 'अध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम्' इत्यरण्यशब्दादध्याये वुञ्प्रत्ययः । तत्प्रतिपाद्यतया तत्सबन्धीनि दहराद्युपासनफलान्यारण्यकानि फलानि । 'क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते' इति न्यायाच्छप्रत्ययविषयादप्यारण्यकशब्दात्प्राग्दीव्यतीयोऽण्प्रत्ययः । तेषां फलानाम् । प्रभवः उत्पत्तिस्थानभूतः । अरण्यशब्दादणि स्वार्थे कप्रत्ययो वा । आरण्यकानां अरण्यजातानां फलानां

प्रभव इत्यपि प्रतीयते । तथापि अरण्यजातानि फलानि वीथ्यां विक्रीयमाणानि बदरादीनि । अभीप्सन् । विश्वस्य पतिः कृष्णः । विस्रसिधान्याञ्जलिना शैशवादृढबन्धासामर्थ्याभिनयेनाङ्गुलीविवरेषु विस्रसमान धान्य फलमूल्यव्रीहियवादि यस्मात्तथाभूतः अञ्जलिः कुब्जकरद्वययोगो यस्य तेन । करेण उपलक्षितः सन् । व्याधात्मजां फलविक्रयिणीं व्याधपुत्रीम् । सिषेवे उपससर्पेत्यर्थः । अत्रापि विश्वानि विश्वाधिकशक्तिरिति श्लोक इव **विभावनाविशेषोक्त्योः संदेहसंकरः** । अत्रारण्यकानामिति श्लेषाङ्गत्वमिति विशेषः । विस्रसिधान्याञ्जलिनेत्यादौ **स्वभावोक्तिरलङ्कारश्च** ॥ ३० ॥

**सुजातरेखात्मकशङ्खचक्रं**
**ताम्रोदरं तस्य करारविन्दम् ।**
**विलोकयन्त्याः फलविक्रयिण्या**
**विक्रेतुमात्मानमभूद्विमर्शः ॥ ३१ ॥**

**सुजातेति** । सुजातरेखात्मके अभिजातरेखारूपे शङ्खचक्रे यस्मिन् तत् । ताम्रोदरं अरुणतलम् । तस्य । करारविन्द फलग्रहणाय प्रसारितम् । विलोकयन्त्याः । फलविक्रयिण्याः फलानि विक्रीणानायाः किरातपुत्र्याः । आत्मानं विक्रेतु रागेण स्वात्मानमेव कृष्णसात्कर्तुम् । विमर्शः विचारः अभूत् । अत्र विलोकयन्त्या विमर्शोऽभूदिति कार्यकारणसमकालत्वलक्षणो**ऽतिशयोक्त्यलङ्कारः** । तेन कृष्णस्याप्राकृतसौन्दर्यं व्यज्यते । फलविक्रयिण्या इत्यत्र यद्यपि 'कर्मणीनिर्विक्रियः' इतीनिप्रत्ययो न भवति 'सोमविक्रयी द्विजः' इत्यादौ कुत्सानिमित्त एव कर्मणि तदनुशासनात्, तथापि फलविक्रयोऽस्या अस्तीति मत्वर्थीयमिनिप्रत्यय-

मादाय समाधेयम् । 'एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ' इति कृदन्तात्प्रतिषेधस्तु प्रायिक इष्यत इति भाष्यवचनात् । 'विक्रयण्याः' इति ल्युडन्तपाठो वा द्रष्टव्यः ॥ ३१ ॥

अपूरयत्स्वादुफलार्पणेन
क्रीडाशिशोर्हस्तपुटं किराती ।
रत्नैस्तदा कौस्तुभनिर्विशेषै-
रापूरितं तत्फलभाण्डमासीत् ॥ ३२ ॥

**अपूरयदिति** । किराती फलविक्रयिणी । क्रीडया शिशोः कृष्णस्य । हस्तपुटं अञ्जलिम् । स्वादुफलार्पणेन । अपूरयत् । तदा तस्मिन्समये । तत्फलभाण्ड तस्याः फलभाजनम् । 'सर्वमावपनं भाण्डं पात्रामत्रे च भाजनम्' इत्यमरः । कौस्तुभनिर्विशेषैः कौस्तुभाद्विशेषरहितैः तत्सदृशैः । रत्नैः किरातवनिताया आदरेण प्रसन्नस्य भगवतः सकल्पनापादितैः । आपूरितम् । आसीत् ॥ ३२ ॥

मुहुः प्रवृत्तं नवनीतचौर्ये
वत्सान्विमुञ्चन्तमदोहकाले ।
उलूखले कुत्रचिदात्तपुण्ये
बन्धुं सतां बन्धुमियेष माता ॥ ३३ ॥

**मुहुरिति** । नवनीतचौर्ये । मुहुः पुनः पुनः । प्रवृत्तम् । अदोहकाले दोहकालव्यतिरिक्ते मध्याह्नादिसमये । वत्सान् । विमुञ्चन्तं मातृभिः संयोजनाय विसृजन्तम् । सतां बन्धुं बन्धुवद्धितैषिणम् । माता यशोदा । आत्तपुण्ये कृष्णाङ्गसंपर्कप्रापकपुण्यवति । कुत्रचित् उलूखले । बन्धुम् । इयेष ॥ ३३ ॥

आनीतमग्रे निजबन्धनार्थं
दामाखिलं संहितमप्यपूर्णम् ।
निरीक्ष्य निर्विण्णधियो जनन्याः
संकोचशक्त्या स बभूव बन्ध्यः ॥ ३४ ॥

**आनीतमिति** । स कृष्णः । निजबन्धनार्थं निजबन्धनायेदं यथा तथा । 'अर्थेन नित्यसमासो विशेष्यलिङ्गता च' इति नपुंसकत्वं । अग्रे पुरतः । आनीतं दाम अखिलं संहितमपि, गृहे यावदस्ति तत्सर्वं परस्परग्रथितमपि । अपूर्णं स्वमायया बन्धनापर्याप्तम् । निरीक्ष्य । निर्विण्णधियः खिन्नमतेः । जनन्याः यशोदायाः । संकोचशक्त्या तन्निर्वेददर्शनोदितकरुणाङ्गीकृतया । बन्ध्यः बन्धनार्हः । बभूव ॥ ३४ ॥

बद्धं तथा भावयतां मुकुन्द-
मयत्नविच्छेदिनि कर्मबन्धे ।
तपस्विनी तत्क्रतुनीतिराद्या
सव्रीडमारण्यकथासु तस्थौ ॥ ३५ ॥

**बद्धमिति** । उलूखले, बद्धम् । मुकुन्दम् । तथा बद्धत्वेन प्रकारेण । भावयतां ध्यायताम् कर्मबन्धे संसारबीजकर्मरूपे बन्धे । अयत्नेन विच्छेदोऽस्यास्तीत्ययत्नविच्छेदिनि सति । आद्या प्राचीना 'यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति' इति श्रुतिसिद्धा । तत्क्रतुनीतिः इह यत्क्रतुर्यत्संकल्पः पुरुषो भवति तस्य प्रेत्य तथा प्राप्त्यौचित्यरूपो वेदान्तिभिस्तत्क्रतुन्याय'इति व्यवह्रियमाणा नीतिः । 'क्रतू अध्वरसंकल्पौ' इति वैजयन्ती । तपस्विनी भगवन्तं बद्धं भावयतां देहपातानन्तरं बन्धविच्छेदेन स्वार्थान्यथा-

भावादीना सती । 'मुनिदीनौ तपस्विनौ' इति विश्व. । सव्रीड सलज्जम् । आरण्यकथासु अरण्यसंबन्धिनीषु औपनिषदीषु कथासु । तस्थौ । यथा लोके स्वोक्तस्यान्यथाभावे सति व्रीडया विवर्णवदनाः क्वचिन्निलीना भवन्ति तद्वदिति भावः । तत्र तत्क्रतुनीतेरारण्यकेष्ववस्थानस्य व्रीडाहेतुकत्वमुत्प्रेक्ष्यत इति हेतूत्प्रेक्षालंकारः तच्च हेतुत्व विशेषणगत्या प्रतीत इति काव्यलिङ्ग च ॥ ३५ ॥

**उलूखलप्रग्रथितेन दाम्ना**
**निबद्धमास्राविललोलनेत्रम् ।**
**सहासमैक्षन्त जनाः समन्ता-**
**दालानितं नागमिवानभिज्ञाः ॥ ३६ ॥**

**उलूखल इति** । उलूखले । प्रग्रथितेन सान्द्रबद्धेन । दाम्ना । निबद्धम् । आस्राविललोलनेत्र स्वच्छन्दसचारविघ्नेन भयेन च अश्रुकलुषचञ्चललोचनम् । आलानित सञ्जातालान आलाने बद्धम् । नाग हस्तिनमिव स्थितम् । यथा वन्यो हस्ती इदप्रथममालाने बन्धनं न सहते तथा बन्धनासहनतया व्याकुलमित्यर्थः । तं कृष्णम् । अनभिज्ञाः अभिनयमात्रमेतद्देवस्येत्यवबोधरहिताः । सहास यथा तथा । ऐक्षन्त ॥ ३६ ॥

**अनादराकृष्टमुलूखलं त-**
**द्यावर्जुनौ शैलनिभौ बभञ्ज ।**
**बभूवतुर्ब्रह्मसुतस्य शापा-**
**न्मुक्तौ मुनेर्यक्षवरौ तदा तौ ॥ ३७ ॥**

**अनादरेति** । अनादराकृष्टम् । तत् । उलूखलम् । शैलनिभौ पर्व-

तसदृशौ । यौ । अर्जुनौ ककुभवृक्षौ । 'ककुभः कुटजेऽर्जुने' इति शब्दार्णवः । बभञ्ज अर्जुनद्वयमध्ये कृष्णे गते तिर्यग्भूतमुभाभ्यामपि निरुद्धगति कृष्णेनाकृष्यमाण सद्भग्नौ चकार । तौ । तदा । ब्रह्मसुतस्य मुनेः नारदस्य । शापात् । मुक्तौ सन्तौ । यक्षवरौ यक्षश्रेष्ठौ । बभूवतुः । पुरा किल नलकूबरो मणिग्रीवश्चेति द्वौ धनदपुत्रौ मदिरापानमत्तौ विवसनौ स्त्रीभिः क्रीडन्तौ नारद दृष्ट्वापि तथैव स्थितौ यावत्कृष्णसमागम स्थावरौ भवतमिति तेन शप्तौ नन्दकुले यमलार्जुनरूपेण प्ररूढाविति पुराणकथा ॥

**शापावधिं ब्रह्मसुतेन दत्तं**
**संप्राप्य तौ शौरिसमागमेन ।**
**देहेन दिव्येन विदीप्यमानौ**
**स्तुत्वा हरिं धाम समीयतुः स्वम् ॥ ३८ ॥**

**शापेति** । तौ यक्षवरौ । ब्रह्मसुतेन नारदेन । दत्तम् । शापावधिं शापान्तम् । शौरिसमागमेन कृष्णस्य सपर्केण । संप्राप्य । दिव्येन देवसबन्धिना । देहेन । विदीप्यमानौ सन्तौ । हरिम् । स्तुत्वा । स्वम् । धाम स्थान अलकाम् । समीयतुः जग्मतुः ॥ ३८ ॥

**अदृष्टपूर्वं भुवि पूतनादे-**
**रुदन्तमुत्पातमुदीक्षमाणाः ।**
**समेत्य गोपाः सह माधवेन**
**बृन्दावनं सत्वरमभ्यगच्छन् ॥ ३९ ॥**

**अदृष्टेति** । भुवि भूलोके । अदृष्टपूव पूर्वमदृष्टम् । 'सुप्सुपा' इति समासः । पूतनादेः । उदन्तम् । उत्पातं उदीक्षमाणाः तस्य स्थानस्य अरिष्टसूचक

विकारं तर्कयन्तः । गोपाः । समेत्य संभूय । माधवेन सह । सत्वरं शीघ्रम् । बृन्दावनं वनविशेषम् । अभ्यगच्छन् तत्रैव वास्तव्यकुटुम्बितया स्थातुं गता इत्यर्थः । बृन्देति गोतर्णकस्य नाम तत्प्रधानं वनं बृन्दावनमिति केचि-दाहुः । दण्डकावनमितिवत्सामान्यविशेषसमासेन बृन्दावनमित्यपरे । वयं तु 'श्रीमद्बृन्दावनं नाम वनं त्रिदशपूजितम्' । 'बृन्दावनवनोत्पन्नकदम्बतरु-कोटरः' इति हरिवंशपुराणादिवचनेषु वनशब्दान्तरसमभिव्याहारदर्शनात् बृन्दावनमित्येतावदपि विशेषनामेत्यालोचयामः ॥ ३९ ॥

**येनौषधीनामधिपं पुरस्ता-**
**दाह्लादहेतुं जगतामकार्षीत् ।**
**तेनैव दध्यौ मनसा वनं त-**
**त्कृष्णो गवां क्षेमसमृद्धिमिच्छन् ॥ ४० ॥**

**येनेति** । कृष्णः । पुरस्तात् सर्गादौ । येन मनसा । जगताम् । आह्लादहेतुम् । ओषधीनां अधिपं चन्द्रम् । अकार्षीत् असृजत् । तेनैव मनसा अखिलजगत्क्षेमङ्करस्वान्तेन तत् । वनम् । गवां क्षेमसमृद्धिं इच्छन् । दध्यौ ध्यायति स्म । यथा गवामभिवृद्धिर्भवति तथा तस्मि-न्वने तृणजलच्छायादिभूमास्त्विति दध्यावित्यर्थः ॥ ४० ॥

**अनुग्रहाब्धेरिव वीचिभेदै-**
**राप्याययामास शुभैरपाङ्गैः ।**
**वनं पृथिव्या इव यौवनं त-**
**द्गोप्ता सतां गोधनवंशचन्द्रः ॥ ४१ ॥**

**अनुग्रहेति** । सतां सात्विकानाम् । गोप्ता संरक्षकः । गोधनानां

गोपानां वशस्य चन्द्रः चन्द्रवदाह्लादकरः कृष्णः । पृथिव्याः भूमेः । यौवनमिव स्थितं तस्याः शोभावहत्वात् । तत् वन बृन्दावनम् । अनुग्रहाब्धेः प्रसादसागरस्य । वीचिभेदैः तरङ्गविशेषैरिव स्थितैः । शुभैः मनोज्ञैः । अपाङ्गैः कटाक्षैः । 'कटाक्षः कोशतापाङ्गः' इति धनजयः । आप्याययामास पोषयामास ॥ ४१ ॥

आसीन्निषेव्या पृथिवी पशूनां
पुण्ड्रेक्षुरम्याणि तृणान्यभूवन् ।
तस्मिन्नरण्ये तरुभिः प्रपेदे
कल्पद्रुमाणामनुकल्पभावः ॥ ४२ ॥

**आसीदिति** । तस्मिन् अरण्ये बृन्दावने । पृथिवी । पशूना गोमहिष्यादीनाम् । निषेव्या कण्टकशर्कराद्यभावेन सवेशादियोग्या । बभूव । पुण्ड्रेक्षुरम्याणि पुण्ड्र इतीक्षुः पुण्ड्रेक्षुः अतिमधुरेक्षुविशेषः । 'रसाल इक्षुस्तद्भेदाः पुण्ड्रकान्तारकादयः' इत्यमरः । तथा स्वादूनि । तृणानि । अभूवन् । तरुभिः । कल्पद्रुमाणाम् । अनुकल्पभावः अमुख्यकल्पता स्वादुसुगन्धिफलकुसुमादिभरिततया तत्सादृश्यमिति यावत् । प्रपेदे प्राप्तः । कर्मणि लिट् ॥ ४२ ॥

अदृष्टपूर्वैरधिकां विशेषै-
रालक्ष्य वन्याममरेन्द्रमान्याम् ।
नन्दोपनन्दप्रमुखैर्ननन्दे
नाकाधिरूढैरिव नाथभूम्ना ॥ ४३ ॥

**अदृष्टेति** । नन्दोपनन्दप्रमुखैः उपनन्दो नाम तस्मिन्व्रजे कश्चिद्गो-

पवृद्धः । 'तत्रोपनन्दनामाह गोपो ज्ञानवयोधिकः' इति भागवतोक्तेः । नन्द उपनन्दश्च प्रमुखौ प्रधानभूतौ येषां तैः गोपैः कर्तृभिः । नाथभूम्ना कृष्णस्य महिम्ना । अदृष्टपूर्वैः पूर्वमदृष्टैः । विशेषैः फलपुष्पादिभिर्द्रव्य-पदार्थैः । 'विशेषोऽवयवे भेदे द्रष्टव्योत्तमवस्तुनि' इति शब्दार्णवः । अधिकां समृद्धाम् । अमरेन्द्रमान्यां देवेन्द्रस्य माननीयां नन्दनसदृशत्वा-दिति भावः । वन्यां वनसमूहम् । पाशादित्वाद्यत्प्रत्ययः । आलक्ष्य आ-लोक्य । नाकाधिरूढैः स्वर्गमधिरूढैरिव । ननन्दे सतुष्टम् । भावे लिट् ॥

दैत्यैस्तृणावर्तमुखैरयत्ना-
न्मुहुर्निरस्तैर्मुदितो मुकुन्दः ।
अभुङ्क्त रामेण सहाद्भुतं त-
त्पुण्यं वनं पुण्यजनेन्द्रमान्यम् ॥ ४४ ॥

**दैत्यैरिति**। अयत्नात् यत्नमप्राप्य । निरस्तैः अनायासेन हतैः । तृणाव-र्तमुखैः तृणासुरो वत्सासुरोऽघासुर इत्येवमादिभिः । दैत्यैर्हेतुभिः । मुहुः मुदितः तेषां हननेन अभीक्ष्ण सतुष्टः । मुकुन्दः । अद्भुत आश्चर्यम् । पुण्य पावनम् । पुण्यजनेन्द्रस्य यक्षेश्वरस्यापि मान्य श्लाघनीयं चैत्ररथ-चारुत्वात् । तत् । वन वृन्दावनम् । रामेण बलदेवेन सह । अभुङ्क्त भुङ्क्ते स्म ॥ ४४ ॥

सपक्षकैलासनिभस्य गोपा
बकस्य पक्षानभितो बबन्धुः ।
वने तदन्यानपि घोरवृत्ती-
न्क्षेप्तुं प्रवृत्ता इव केतुमालाः ॥ ४५ ॥

**सपक्षेति** । गोपाः । सपक्षकैलासनिभस्य पक्षसहितकैलासतुल्यस्य । बकस्य बकरूपधारिणः कृष्णेन हतस्यासुरस्य । पक्षान् पतत्राणि । कीदृशान्, वने तस्मिन् । तदन्यान् बकव्यतिरिक्तानपि । घोरवृत्तीन् क्रूरचरितान् धेनुकादीन् । क्षेप्तु निरसितुम् । प्रवृत्ताः । केतुमालाः उत्पातराजीरिव स्थितान् । अभितः सर्वतः वृक्षाग्रादिषु । बबन्धुः लीलार्थं इतरत्रासार्थं च बध्नन्ति स्म ॥ ४५ ॥

**पुरस्कृतं मंगलगीतवाद्यैः**
**पुंसः प्रसत्त्यै जगतां प्रसूतेः ।**
**कयापि तत्र स्पृहयान्वतिष्ठ-**
**न्कन्याव्रतं किंचन गोपकन्याः ॥ ४६ ॥**

**पुरस्कृतमिति** । तत्र नन्दकुले । गोपकन्याः । कयापि स्पृहया किंचित्फलोद्देशेन । जगतां प्रसूतेः लोकानामुपादानभूतस्य । प्रसूयन्तेऽस्मिन्नित्यधिकरणे क्तिन्प्रत्ययः । पुंसः परमपुरुषस्य । प्रसत्त्यै प्रसादाय । मङ्गलगीतवाद्यैः । पुरस्कृतं पूजितम् । 'पुरस्कृतः पूजितेऽरात्यभियुक्तेऽग्रतः कृते' इत्यमरः । किंचन । कन्याव्रतं कन्याभिरनुष्ठेयं व्रतम् । अन्वतिष्ठन् अनुतिष्ठन्ति स्म ॥ ४६ ॥

**निशात्ययस्नानसमुद्यतानां**
**निक्षिप्तमाभीरकिशोरिकाणाम् ।**
**कूलादुपादाय दुकूलजालं**
**कुन्दाधिरूढो मुमुदे मुकुन्दः ॥ ४७ ॥**

**निशात्ययेति** । मुकुन्दः । निशात्ययस्नानसमुद्यतानां व्रताङ्गभूत-

प्रातःस्नाने समुद्युक्तानाम् । आभीरकिशोरिकाणां गोपकन्यानाम् । किशोर-शब्दात् 'वयसि प्रथमे' इति ङीपि 'अल्पे' इति कप्रत्यये च सति 'केऽणः' इति ह्रस्वः । निक्षिप्तं विस्रस्य न्यस्तम् । दुकूलजालं क्षौम-समूहम् । कूलात् यमुनातीरात् । उपादाय । कुन्दं माध्यतरुम् । अधि-रूढः सन् । मुमुदे । विवसनानां तासां स्वैरदर्शनं भविष्यतीति प्रमु-दितोऽभूदित्यर्थः ॥ ४७ ॥

**स चैकहस्तप्रणतिं विधून्व-**
**न्क्षौमार्थिनीनां हरिरङ्गनानां ।**
**अन्योन्यहस्तार्पणसंप्रवृत्त-**
**मासां जहासाञ्जलिमप्यपूर्वम् ॥ ४८ ॥**

**स चेति** । सः हरिः । क्षौमार्थिनीना जलादुत्तीर्य कुन्दतलमागत्य क्षौमाण्यर्थयमानानाम् । अङ्गनानाम् । एकहस्तप्रणति कराभ्यां गोप्याङ्ग तिरोधाय कुन्दमूलमागतासु तासु भवतीभिर्नमस्कारे कृते दीयत इति स्वेनोक्ते एकेन हस्तेन गोप्याङ्ग तिरोधाय तदन्येनैकहस्तेन क्रियमाणा प्रणतिम् । विधून्वन् अञ्जलिबन्धेन प्रणतिं विना न दीयत इति ता प्रणतिमनङ्गीकुर्वन्सन् । अन्योन्यहस्तार्पणसंप्रवृत्तं गोप्याङ्गप्रकाशभिया स्वहस्तद्वयेन अञ्जलिबन्धमकुर्वतीनां तासां द्वयोर्द्वयोः परस्परस्य एकै-कहस्तार्पणेन सुनिष्पन्नम् । अत एव, अपूर्वं इतः पूर्वं कुत्राप्यदृष्टम् । आसां गोपस्त्रीणाम् । अञ्जलिं संयुतकरद्वयक्रियमाणप्रणतिमपीत्यर्थः । जहास परिहसति स्म, किमयमञ्जलिपदार्थ इति परिहसन् तासां तादृशमञ्जलिबन्धमपि नाङ्गीचकारेत्यर्थः । चकारः पूर्वश्लोकक्रियासमुच्च-यार्थः ॥ ४८ ॥

स चात्मचण्डातकमात्रभाजां
क्षौमार्थिनीनां स्वयमर्थ्यमानैः ।
अनन्यहस्तार्पणसंप्रवृत्तै-
स्तासां जहासाञ्जलिभिस्तदीयैः ॥ ४९ ॥

**स चेति** । सः हरिः । आत्मचण्डातकमात्रभाजां निजार्धोरुकमात्रसहितानाम् । क्षौमार्थिनीनां निजनिजदुकूलानि अपेक्षमाणानाम् । तासां गोपस्त्रीणाम् । स्वय आत्मना कृष्णेनेत्यर्थः । अर्थ्यमानैः अभिलष्यमाणैः, अन्यहस्तविरहितमेवाञ्जलिबन्धः क्रियतामिति कृष्णेनादिष्टैरित्यर्थः । अनन्यहस्तार्पणसप्रवृत्तैः अन्यदीयहस्तसपर्करहितं यथा तथा निष्पन्नैः । तदीयैः तत्तन्मात्रसबन्धिभिः । अञ्जलिभिः । जहास जितमस्माभिरिति सतोष हसति स्मेत्यर्थः । तासां तदीयैरित्युक्तिः तत्तन्मात्रसबन्धित्वद्योतनार्थेति बोध्यम् ॥ ४९ ॥

प्रसुप्तमुद्बोधयता परत्वं
वीरश्रियो विभ्रममण्डनेन ।
नीलादिनिर्वेशनिधानधाम्ना
नाथो बभासे नवयौवनेन ॥ ५० ॥

**प्रसुप्तमिति** । नाथ. कृष्ण. । प्रसुप्त शैशवेऽत्यद्भुतचरित्राणां किंचित्प्रदर्शनादनभिव्यक्तम् । परत्वं परब्रह्मभावम् । उद्बोधयता अभिव्यञ्जयता, गोवर्धनोद्धरणादीनामद्भुतचरित्राणां भावित्वात् । वीरश्रियः शौर्यलक्ष्म्याः । विभ्रममण्डनेन विलासार्थेनालकारेण, चाणूरमर्दनादिना तदुन्मेषस्य भावितत्वात् । नीलादीनां वल्लवीनां निर्वेशस्य उपभोगस्य निधा-

नधाम्ना निक्षेपस्थानभूतेन । नवयौवनेन । बभासे । 'वयसा नवेन' इति पाठेऽपि वयःशब्देन यौवनं विवक्षितम् । 'वयः पक्षिणि बाल्यादौ वयो यौवनमात्रके' इति विश्वः । पञ्चवर्षपर्यन्तशैशवात्ययमात्रमेवात्र यौवनोचिताकारविहारयोगाद्यौवन विवक्षितम्, न तु मुख्ययौवनम्; अष्टमवयसि कंसवधादिलीलायाः पुराणप्रसिद्धेः । इहाप्यनन्तरमेव 'बालौ युवानाविव तौ बलाढ्यौ' इति वक्ष्यमाणत्वात् । गोवर्धनोद्धरणे 'अमुक्तबाल्यस्य समग्रशक्तेः क्षणार्धवत्सप्त दिनान्यतीयुः' इति वक्ष्यमाणत्वाच्च ॥ ५० ॥

**विहारपर्वक्रमचारु शौरेः**
**कल्यं वयः कामगृहीतियोग्यम् ।**
**मनोभिरास्वाद्यतमं प्रपेदे**
**माधुर्यमिक्षोरिव मध्यभागः ॥ ५१ ॥**

**विहारेति** । विहाराणां क्रीडानामुत्तरोत्तरमुत्कृष्यमाणाना पर्वक्रमेण तारतम्यपरिपाट्या चारु क्रमसवर्धमानक्रीडाभेदमनोहरम् । कामस्य मन्मथस्य गृहीतौ परिग्रहे योग्यं मन्मथाधिष्ठेयम् । शौरेः । कल्य चतुरम् । 'कल्यौ नीरोगदक्षयोः' इति विश्वः । वयः यौवन कर्तृ । इक्षोः इक्षुदण्डस्य । मध्यभाग इव । मनोभिः । आस्वाद्यतम अतिशयेनास्वाद्यम् । माधुर्य प्रपेदे । माधुर्यमपीक्षोर्मध्यभाग एवातिशयितामिति भावः ॥५१॥

**वंशस्वनो वत्सविहारपांसुः**
**संध्यागमस्तस्य च वन्यवेषः ।**
**आयाति कृष्णे व्रजसुन्दरीणा-**
**मासीच्चतुःस्कन्धमनङ्गसैन्यम् ॥ ५२ ॥**

**वंशस्वन इति** । कृष्णे । आयाति वत्सपालैः सह क्रीडित्वा वत्सानां पश्चात्समायाति सति । वंशस्वनः सन्निकर्षाच्छ्रूयमाणः कृष्णस्य वेणुध्वनिः । वत्सविहारपांसुः गृहं प्रत्यागच्छतां वत्सानां विहारेण उत्थितो रेणुः । तच्च । सध्यागमः संध्यायां रात्रिकालसंनिकृष्टायां आगमनम् । वन्यवेषः पल्लवमयूरपिञ्छादिरूपश्चेति । व्रजसुन्दरीणां व्रजाङ्गनानाम् । चतुस्कन्धं चतुर्व्यूहम् । अनङ्गसैन्यम् । अभूत् । चत्वार्यपि तासामुद्दीपकान्यभवन्नित्यर्थः॥

**समाश्रितां विभ्रमसैन्यभेदैः**
**कान्त्या स्वया कल्पितचारुवप्राम् ।**
**व्रजस्त्रियः कृष्णमयीं व्यजान-**
**न्क्रीडार्गलां क्षेमपुरीमपूर्वाम् ॥ ५३ ॥**

**समाश्रितामिति** । व्रजस्त्रियः गोकुलाङ्गनाः । विभ्रमसैन्यभेदैः भ्रूनयनादिविभ्रमा एव सैन्यविशेषास्तैः । समाश्रिताम् । स्वया । आत्मीयया । कान्त्या । कल्पितचारुवप्रां निर्मितरुचिरप्राकाराम् । प्राकारमूलबन्धवाचिना वप्रशब्देन प्राकारमात्र विवक्ष्यते । क्रीडा गोपीवस्त्रापहारादिविहार एव अर्गला यस्यास्ताम् । कृष्णमयीं कृष्णरूपाम् । अपूर्वाम् । क्षेमपुरीं क्षेमस्य कुशलस्य आनन्दस्य राजकल्पस्य नगरीम् । व्यजानन् कृष्णस्य निरतिशय-सभोगानन्दहेतुतया तमानन्दसाम्राज्यपुरीत्यध्यगच्छन्नित्यर्थः । अत्र कृष्ण-मयीं क्षेमपुरीमित्य**पह्नवालङ्कारः** । राजनगर्याः सैन्यविशेषैरिव विभ्र-मैस्तस्याः परिपोष इति तेषां सैन्यभेदत्वेन रूपणम् । परितः स्थित-त्वात्कान्तेर्वप्रत्वेन रूपणम् । अर्गलागुप्त्येव क्रीडया आनन्दनगर्याः समृद्धि-रिति तस्यास्तथात्वेन रूपणम् । अनेन च व्यजानन्निति वचनेन तासां तत्संभोगेच्छारूपा रतिस्तत्र विवक्षिता जातेति व्यज्यते । ततश्च कार्ये प्रस्तुते कारणाभिधानरूपा **अप्रस्तुतप्रशंसा चालङ्कारः** ॥ ५३ ॥

अनुश्रवाणामवतंसभूतं
बर्हावतंसेन विभूषयन्ती ।
अदिव्यया चर्मदृशैव गोपी
समाधिभाजामभजत्समाधिम् ॥ ५४ ॥

**अनुश्रवाणामिति** । गोपी केनचिद्व्याजेन तत्परिचयमिच्छन्ती काचन गोपतरुणी । अनुश्रवाणां वेदानाम् । अवतंसभूतं उत्तमाङ्गाभरणमिव स्थितम् । भूतशब्दोऽपि निभादिशब्दवत्सादृश्यवाची । "भूतं न्याय्ये समे प्राप्ते यथार्थातीतयोरपि" इति रत्नमाला । वेदान्तप्रतिपाद्यमिति यावत् । 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेऽपि शेखरे' इत्यमरः । कृष्णम् । बर्हावतंसेन मयूरपिञ्छरूपेणावतंसेन । विभूषयन्ती सती । अदिव्यया चर्मदृशैव प्राकृतचर्मलोचनेनैव । समाधिभाजां योगिनाम् । समाधिम् । अभजत् । योगिनो हि योगाभ्याससंस्कृतया दिव्यया प्रत्यग्दृष्ट्या ऐकाग्र्येण समाधिं भजन्ति, इयं त्वयत्नाच्चर्मदृष्ट्यैव समाधिमभजत् । मयूरपिञ्छप्रयुक्तशोभाविशेषमनन्यमनाः सती निर्निमेषं दृष्ट्वैवावस्थितवतीत्यर्थः ॥ ५४ ॥

कलापिनां कल्पितमाल्यभावैः
पत्रैस्तदा पत्रलदेहकान्तिम् ।
अवाप्य संचारितमालमाद्यं
छायात्मतां प्रापुरिवास्य गावः ॥ ५५ ॥

प्रसङ्गाद्देवस्य मयूरपिञ्छाभरणानि श्लोकचतुष्टयेन वर्णयति—**कलापिनामिति** । गावः नन्दस्य सुरभयः । कल्पितो माल्यभा-

वो येषां तैः माल्यरूपेण ग्रथितैः । कलापिनां पत्रैः मयूरपिञ्छैः । पत्रलद्देहकान्तिं पत्रं लाति आदत्त इति पत्रला पत्रवती देहकान्तिर्यस्य तं मेदुरदेहकान्तिमिति यावत् । पत्रोपपदाल्लातेः 'आतोऽनुपसर्गे कः' इति कः। लच्प्रत्ययस्तु न सभवति, सिध्मादावपाठात्। अत एव वामनसूत्रम् । 'पत्र लातेः कः' इति । आद्यम् । सचारितमाल जगमं तापिञ्छवृक्षं कृष्णमिति भावः । अत एव निगीर्याध्यवसानादतिशयोक्तिः । 'कालस्कन्धस्तमालः स्यात्तापिञ्छोऽपि' इत्यमरः । अवाप्य संप्राप्य । अस्य कृष्णस्य । छायात्मतां प्रापुरिव छायावत्तमेवान्वसरन्नित्यर्थः ॥ ५५ ॥

वितन्वता मान्मथमिन्द्रजालं
पिञ्छेन तापिञ्छनिभो बभासे ।
अनेकरत्नप्रभवेन धाम्ना
शारात्मना शैल इवैन्द्रनीलः ॥ ५६ ॥

**वितन्वतेति**। तापिञ्छनिभः तमालश्यामलः कृष्णः। मान्मथ मन्मथसबन्धि । इन्द्रजाल द्रष्टृजनव्यामोहनम् । 'देशकालापरोक्ष्य यत्परोक्षस्यैव वस्तुनः । मन्त्रौषधक्रियाभेदैरिन्द्रजाल प्रचक्षते ।' वितन्वता । पिञ्छेन । ऐन्द्रजालिका मयूरपिञ्छभ्रमणेन द्रष्टॄन्व्यामोहयन्तीति प्रसिद्धिः । अनेकरत्नप्रभवेन वज्रवैडूर्यमरकतादिबहुविधरत्नप्रभवेन । अत एव, शारात्मना विचित्ररूपेण । धाम्ना तेजसा । ऐन्द्रनीलः शैल इव इन्द्रनीलमयपर्वत इव । बभासे भाति स्म ॥ ५६ ॥

मुहुः स्पृशन्ती मुमुदे यशोदा
मुग्धाङ्गनामोहनवांशिकेन ।

**मनीषिणां माङ्गलिकेन यूना**
**मौलौ धृतां मण्डनबर्हमालाम् ॥ ५७ ॥**

**मुहुरिति** । यशोदा । मुग्धाङ्गनामोहनवांशिकेन मुग्धाङ्गनानां मोहजनकेन वंशवादकेन । वशनादैर्मुग्धानां मोहजनकेनेत्यर्थः । वशः शिल्पमस्येति वांशिकः । 'शिल्पम्' इति सूत्रेण ठक्प्रत्ययः । मनीषिणां विदुषाम् । माङ्गलिकेन क्षेमकरेण । मङ्गलं प्रयोजनमस्येति माङ्गलिकः । 'प्रयोजनम्' इति सूत्राट्ठक्प्रत्ययः । यूना कृष्णेन । मौलौ । धृताम् । मण्डनबर्हमालां अलङ्कारभूतां पिञ्छमालाम् । मुहुः स्पृशन्ती वात्सल्यात्पुनः पुनः स्पृशन्ती सती । मुमुदे मोदते स्म ॥ ५७ ॥

**कृतास्पदा कृष्णभुजान्तराले**
**प्रालम्बबर्हावलिराबभासे ।**
**विशुद्धहेमद्युतिरब्धिकन्या**
**श्यामायमानेव तदङ्गकान्त्या ॥ ५८ ॥**

**कृतास्पदेति** । कृष्णभुजान्तराले कृष्णवक्षसि । कृतास्पदा । प्रालम्बबर्हावलिः लम्बमानकण्ठाभरणरूपा बर्हावलिः । 'प्रालम्बमृजुलम्बि स्यात्कण्ठात्—' इत्यमरः । विशुद्धहेमद्युतिः स्वतो निष्कलङ्ककनकरुचिः । तदङ्गकान्त्या । श्यामायमाना श्यामा भवन्ती । लोहितादेराकृतिगणत्वात्क्यष् । अब्धिकन्या लक्ष्मीरिव । आबभासे । बर्हमाला किंचित्कनकरुचिर्बहुलश्यामलेत्येवमुत्प्रेक्षा ॥ ५८ ॥

**साचीकृतानि प्रणयत्रपाभ्यां**
**व्यावृत्तराजीवनिभानि शौरिः ।**

सभ्रूविलासानि ददर्श तासां
वक्त्राणि वाचालविलोचनानि ॥ ५९ ॥

**साचीकृतानीति** । शौरिः कृष्णः । प्रणयत्रपाभ्यां अनुरागेण लज्जया च । साचीकृतानि तिर्यक्कृतानि । 'वदति हि सवृतिरेव कामिताम्' इति न्यायात् वदनसाचीकरण त्रपाया इवानुरागस्याप्यनुभावः । अत एव, व्यावृत्तराजीवनिभानि विवलिततामरसतुल्यानि । सभ्रूविलासानि भ्रूविलाससहितानि । वाचालविलोचनानि वाचालानि बहुभाषीणि तिर्यगवलोकनभेदैः स्फुटमनुराग सूचयन्ति विलोचनानि येषा तानि । तासां व्रजवधूनाम् । वक्त्राणि । ददर्श ॥ ५९ ॥

निरङ्कुशस्नेहरसानुविद्धा-
न्निष्पन्दमन्दालसनिर्निमेषान् ।
वंशेन कृष्णः प्रतिसंबभाषे
वार्ताहरान्वामदृशां कटाक्षान् ॥ ६० ॥

**निरङ्कुशेति** । कृष्णः । निरङ्कुशस्नेहरसानुविद्धान् निर्यन्त्रणप्रेमरसरूषितान् । निष्पन्दमन्दालसनिर्निमेषान् निष्पन्दाः स्वविषयादन्यत्र विषये अस्पन्दमानाः मन्दाः मदमन्थराः अलसा व्रीडेन विषयात्प्रत्यावृत्तिमन्तः । 'आलस्य तदभीष्टार्थाद्व्रीलादेर्यन्निवर्तनम्' निर्निमेषाः निमेषरहिताश्चेति विशेषणसमासः, तान् । वामदृशां रुचिरलोचनानामङ्गनानाम् । वार्ताहरान् संभोगप्रार्थनारूपतदीयवार्ताहरान्, स्फुटमेव सभोगेच्छासूचकत्वात्तथा व्यपदेशः । कटाक्षान् अवलोकविशेषान् । 'यद्गतागतविश्रान्तिवैचित्र्येण विवर्तनम् । तारकायाः कलाभिज्ञास्तं कटाक्षं प्रचक्षते ॥'

इति शार्ङ्गदेवः । वशेन प्रतिसंबभाषे वेणुवादनविलासेन तत्प्रार्थनाङ्गीकारं सूचयामासेत्यर्थः ॥ ६० ॥

अशिक्षितं तुम्बुरुनारदाद्यै-
रामीरनाट्यं नवमास्थितेन ।
जगे सलीलं जगदेकधाम्ना
रागाब्धिना रञ्जयतेव विश्वम् ॥ ६१ ॥

**अशिक्षितमिति** । तुम्बुरनारदाद्यैः गान्धर्वशास्त्राभियुक्तैः । अशिक्षितं अनभ्यस्तम् । नव नूतनम् । आभीरनाट्य आभीरभावाभिनयम् । स एव नाट्यत्वेनाध्यवसितः । आस्थितेन अवलम्बितवता । रागाब्धिना । 'योऽसौ ध्वनिविशेषस्तु स्वरवर्णविभूषितः । रञ्जको जनचित्तानां स रागः कथितो बुधैः ॥' इत्युक्तलक्षणानां श्रीरागादीनामब्धिवन्निधानभूतेन । अत एव, विश्वं कृत्स्नं चेतनाचेतनमपि प्रपञ्चम् । रञ्जयतेव स्थितेन । जगदेकधाम्ना जगतामेकेनावासस्थानेन कृष्णेन । सलील यथा तथा । जगे गीयते स्म ॥ ६१ ॥

अपत्रपासैकतमास्थितानां
रागोदधौ कृष्णमुखेन्दुनुन्ने ।
हस्तावलम्बो न बभूव तासा-
मुत्पक्ष्मणामुत्कलिकाप्लुतानाम् ॥ ६२ ॥

**अपत्रपेति** । कृष्णमुखेन्दुना नुन्ने उत्तरलीकृते । रागोदधौ । अपत्रपा अन्यतो लज्जैव सैकत पुलिनं तत् । आश्रितानां तदाश्रयणाद्रागाब्धौ निमज्जनं प्राप्तानाम् । उत्कलिकाप्लुतानां उत्कण्ठाभरितानां पक्षे

कल्लोलाप्लुतानाम् । 'भवेदुत्कलिकोत्कण्ठाहृल्लासलिलवीचिषु' इति विश्वः । 'सर्वेन्द्रियसुखास्वादो यत्रास्तीति मन. स्त्रियाः । तत्प्राप्तीच्छां ससंकल्पामुत्कण्ठां कवयो विदु ।' उत्पक्ष्मणां तन्मुखैकदत्तदृष्टितया पक्षे उत्तारयितृदिदृक्षया च उन्नमितपक्ष्मणाम् । तासाम् । हस्तावलम्बः रागोदधिमुत्तरितुं हस्तस्य कश्चिदवलम्बः । न बभूव । ततश्चान्यस्य हस्तावलम्बस्याभावादाश्रितस्य त्रपामैकतस्य कृष्णमुखेन्दूदयतरलीभवदुत्कलिकाशतग्रस्ततया विनश्वरत्वात्तासां तदभिसरणरूप रागोदधौ निमज्जनमेव प्रसक्तमिति भावः ॥ ६२ ॥

अयन्त्रितस्वैरगतिः स तासां
संभावितानां करपुष्करेण ।
प्रस्विन्नगण्डः प्रणयी चकाशे
मध्ये वशानामिव वारणेन्द्रः ॥ ६३ ॥

**अयन्त्रितेति** । अयन्त्रितस्वैरगतिः कर्माद्यनियमितस्वैराचरणः । प्रणयी अनुरागवान् । प्रस्विन्नगण्डः सात्विकभावरूपस्वेदोल्लसितगण्डः । वारणेन्द्रपक्षे मदोद्रेकादव्याहतस्वैरगमनः क्लिन्नगण्डश्चेति योज्यम् । स कृष्णः । करपुष्करेण कराम्बुजेन नागपक्षे कराग्रेण । 'पुष्कर करिहस्ताग्रे' इत्यमरः । सभावितानां उपलालितानाम् । तासां गोपवधूनाम् । मध्ये । वशानां करिणीनां मध्ये । वारणेन्द्र इव । चकाशे अभिसरणार्थमागतास्ताः सर्वा रमयामासेत्यर्थः ॥ ६३ ॥

विमोहने वल्लवगेहिनीनां
न ब्रह्मचर्यं बिभिदे तदीयम् ।

संपत्स्यते बालकजीवनं त-
त्सत्येन येनैव सतां समक्षम् ॥ ६४ ॥

**विमोहन इति** । वल्लवगेहिनीनां गोपभार्याणाम् । विमोहने सभोगेऽपि । 'सुरतं मोहन प्रोक्तम्' इति हलायुधः । ब्रह्मचर्यं स्त्रीसङ्गराहित्यरूपम् । न बिभिदे न श्लथमासीत् । भिदेः कर्मकर्तरि लिट् । सत्येन अबाधितेनैव । येन ब्रह्मचर्येण । सतां व्यासादीनाम् । समक्षम् । तत् प्रसिद्धम्, यदश्वत्थामास्त्रविप्लुष्टमिति भावः । बालकजीवन उत्तरागर्भच्युतस्य परीक्षितो जीवनम् । सपत्स्यते संपन्न भविष्यति । 'यदि मे ब्रह्मचर्यं स्यात्सत्य च मयि तिष्ठति । अव्याहत ममैश्वर्यं तेन जीवतु बालकः ॥ पादेन कमलाभेन ब्रह्मरुद्रार्चितेन च । पस्पर्श पुण्डरीकाक्ष आपादतलमस्तकम् ॥' इति कृष्णेन पदा स्पृष्टः परीक्षिज्जीवन प्रतिलेभे इति भारते कथा । संपत्स्यत इति विमोहनकालमपेक्ष्य लृट्प्रयोगः । तथा च ब्रह्मचर्येण दग्धबालकोज्जीवनमेव तदस्खलने प्रमाणमिति भावः । ननु गोपकन्या भुक्ताः ब्रह्मचर्यं च न स्खलितमिति कथम् । उच्यते । पुरुषस्य ब्रह्मचर्यं रागपरवशानां तत्सभोगाभावे प्राणान्धारयितुमशक्नुवतीनां स्त्रीणां तत्प्राणत्राणाय परिग्रहणे न लुप्यते । तदेतन्महाभारते पार्थतीर्थयात्रायामुलूप्या नागकन्यकया मदनातुरया प्रार्थितसभोग 'ब्रह्मचर्यमिदं भद्रे मम द्वादशमासिकम् । धर्मराजेन चादिष्ट नाहमस्मि स्वय वशः' इत्युक्तवन्त पार्थं प्रति 'जानाम्यह पाण्डवेय यथा चरसि मेदिनीम् । तथा हि ते ब्रह्मचर्यमिदमादिष्टवान्प्रभुः । परस्पर वर्तमानान्द्रुपदस्यात्मजां प्रति । यो नोऽनुप्रविशेन्मोहात्स नो द्वादशमासिकम् । वने चरेद्ब्रह्मचर्यमिति यः समयः कृतः । परित्राणं च कर्तव्यमार्तानां पृथुलोचन । कृत्वा मम परित्राण तव धर्मो न लुप्यते । यदि चाप्यस्य धर्मस्य सूक्ष्मोऽपि स्याद्व्यतिक्रमः । स च ते

धर्म एव स्याद्दत्त्वा प्राणान्ममार्जुन ।'. इत्युलूपिकावचनेन, तदनन्तरम् 'एवमुक्तस्तु कौन्तेयः पन्नगेश्वरकन्यया । कृतवांस्तत्तथा सर्वं धर्ममुद्दिश्य कारणम् ।' इत्यर्जुनस्य तद्वचनाङ्गीकरणप्रतिपादनेन ततस्तस्य तत्परिग्रहाद्ब्रह्मचर्यवैगुण्यं तत्प्रायश्चित्ताचरणस्य चानुपदेशेन चावसीयते । अत्र च गोपगृहिणीनां भगवत्परिग्रहालाभे प्राणधारणाशक्तता भागवते स्फुटं प्रतिपादिता, इहापि 'हस्तावलम्बो न बभूव तासाम्' इति सूचितैव । अपि चास्य ब्रह्मचर्यस्खलनं न तावच्चरमधातुमोक्षणम्, भागवते 'आत्मन्यवरुद्धसौरतः' इति तस्य गोपिकासंभोगे वीर्यनिरोधोक्तेः । नाप्यालिङ्गनादिना, सर्वात्मनस्तस्य स्वशरीरातिरिक्तशरीराभावात्, स्वशरीरालिङ्गनादेश्च ब्रह्मचर्याविरोधित्वात् । इदं च पाद्मोत्तरखण्डे 'धर्मसंस्थापनार्थाय ह्यवतीर्य महीतले । परदाराभिगमनं कथं कुर्याज्जनार्दनः' इति पृष्टवतीमुमां प्रति 'स्वशरीरपरिष्वङ्गाद्रतिर्नास्ति वरानने' इति महेश्वरवचनेन स्पष्टं प्रतिपादितम्. अत्र च 'अयन्त्रितस्वैरगतिः' इत्यनेन सूचितम् । अतो न कश्चिद्विरोध इति भावः ॥ ६४ ॥

स्वसंभवं कृष्णमवेक्षमाणो
 बन्धुप्रसूतं च बलं व्रजेशः ।
निसर्गमैत्र्या नियतैकभावौ
 न्ययुङ्क्त तौ वत्सकुलानि गोप्तुम् ॥ ६५ ॥

**स्वसंभवमिति** । व्रजेशः नन्दः । कृष्णं स्वसंभवं स्वात्मजम् । अवेक्षमाणः । बलं च बन्धुप्रसूतं स्नेहाद्वसुदेवो बन्धुरिति बन्धुसुतम् । अवेक्षमाणः सन्, उभयोर्नियोगार्हतां पश्यन्नित्यर्थः । निसर्गमैत्र्या स्वभावसिद्धेन

स्नेहेन । मित्रशब्दाद्भावार्थे ष्यञ् ; 'षिद्गौरादिभ्यश्च' इति ङीष् । नियतैकभावौ नियतः स्थिरः एकः एकरूपोऽर्थान्तररहितो भावः अभिप्रायो ययोस्तौ । तौ रामकृष्णौ । वत्सकुलानि वत्सगणान् । गोप्तुं रक्षितुम् । न्ययुङ्क्त नियुङ्क्ते स्म ॥ ६५ ॥

अनन्यतन्त्रः स्वयमेव देवा-
न्पद्मासनादीन्प्रजनय्य रक्षन् ।
स रक्षकः सीरभृता सहासी-
न्नेता गवां नन्दनियोगवर्ती ॥ ६६ ॥

**अनन्येति** । अनन्यतन्त्र. अनन्याधीनः । स्वयमेव स्वेच्छामात्रेण । पद्मासनादीन् ब्रह्मादीन् । देवान् । प्रजनय्य उत्पाद्य । रक्षन् । स नेता नाथः। नन्दनियोगवर्ती नन्दस्य नियोगे वर्तमानः सन् । सीरभृता बलदेवेन सह । गवा रक्षक आसीत् । नन्देन बाल इति वत्सपालनमात्रे नियुक्तो गवामपि रक्षक आसीदिति तदादरातिशयो दर्शितः । अत एव 'स नैचिकी' प्रत्यहमातपान्ते ' इत्यादि श्लोकेऽपि प्रसूतानामपि गवां कालनमग्रे वक्ष्यते ॥ ६६ ॥

कथं व्रजेच्छर्करिलान्प्रदेशा-
न्पद्भ्यामसौ पल्लवकोमलाभ्याम् ।
इति स्नुतस्तन्यरसा यशोदा
चिन्तार्णवे न प्लवमन्वविन्दत् ॥ ६७ ॥

**कथमिति** । स्नुतस्तन्यरसा कृष्णे नन्दनियोगेन गोवत्सानां रक्षणाय वनं प्रति प्रतिष्ठमाने वात्सल्येन प्रस्नुतस्तनोद्भवरसा । यशोदा कर्त्री ।

असौ कुमारः । पल्लवकोमलाभ्याम् । पद्भ्यां पादाभ्याम् । शर्करिलान् शर्करावत. । 'देशे लुबिलचौ च' इति शर्कराशब्दान्मत्वर्थीय इलच्प्रत्ययः । प्रदेशान् अरण्यप्रदेशान् । कथ व्रजेत् गन्तुं शक्नुयात् । शक्तौ लिङ् । इति चिन्तैवार्णवः तस्मिन् । प्लव तरणोपायमुडुपम् । नान्वविन्दत न लेभे । दुस्तरे चिन्तार्णवे मग्नाभूदित्यर्थ. ॥ ६७ ॥

**विहारवित्रासितदुष्टसत्त्वौ**
**मृगेन्द्रपोताविव धीरचेष्टौ ।**
**बभूवतुः शाश्वतिकेन भूम्ना**
**बालौ युवानाविव तौ बलाढ्यौ ॥ ६८ ॥**

**विहारेति** । मृगेन्द्रपोतौ सिंहशावकाविव । धीरचेष्टौ उदारचरितौ, सिंहशाववद्वने व्याघ्रादीनलक्षीकृत्य सचरन्तावित्यर्थः । विहारेण मृगयादिरूपेण वित्रासिताः उद्वेजिताः दुष्टसत्त्वाः व्याघ्रादयः याभ्यां तौ । बालौ रामकृष्णौ । शाश्वतिकेन नित्यसिद्धेन । शश्वच्छब्दात् 'कालाट्ठञ्' इति शैषिकष्ठञ्प्रत्ययः । बहिष्टिलोपविधानादनित्यः 'अव्ययानां भमात्रे टिलोपः' इति न टिलोपः । भूम्ना महिम्ना परब्रह्मभावरूपेण । युवानाविव । बलाढ्यौ बलसमृद्धौ । बभूवतुः ॥ ६८ ॥

**सिन्दूरितौ वत्सपरागजालैः**
**सितासितौ बालगजाविव द्वौ ।**
**उदारलीलावुपलक्ष्य गोप्यः**
**सर्वास्तदानन्यवशा बभूवुः ॥ ६९ ॥**

**सिन्दूरिताविति** । तदा । वत्सपरागजालैः वत्सानां खुरोत्थापितैः

पांसुपुञ्जैः। सिन्दूरितौ सजातसिन्दूरौ। सितासितौ धवलमेचकौ। बाल-गजौ कलभाविव स्थितौ। उदारलीलौ रमणीयचेष्टौ। तौ द्वौ रामकृष्णौ। उपलक्ष्य। सर्वा गोप्यः। अनन्यवशाः अनन्यायत्ताः, तदुभयमात्राधीनाः। बभूवुः। 'वशो जनस्पृहायत्तेष्वायत्तत्वप्रभुत्वयोः' इति वैजयन्ती ॥६९॥

**गोपायमाने पुरुषे परस्मि-**
**न्गोरूपतां वेदगिरो भजन्त्यः।**
**भव्यैरसेवन्त पदं तदीयं**
**स्तोभप्रतिच्छन्दनिभैः स्वशब्दैः ॥ ७० ॥**

**गोपायमान इति**। परस्मिन्पुरुषे परमात्मनि। गोपायमाने गोप-वदाचरति सति। 'कर्तुः क्यङ् सलोपश्च' इत्याचारार्थे क्यङ् प्रत्ययः। वेदगिरः। गोरूपतां गवाकारताम्। 'त्वतलोर्गुणवचनस्य' इति पुवद्भावः। संज्ञाजातिव्यतिरिक्ता गुणवचना इत्याहुः। भजन्त्यः आश्रयन्त्यः सत्यः। स्तोभप्रतिच्छन्दनिभैः सामवेदे ऋगक्षरव्याप्तसामभागपूरणार्थाः 'हा उहा उ' इत्यादयः शब्दाः स्तोभाः, तत्प्रतिच्छन्दनिभैः अर्थराहित्येन तत्प्रतिबिम्बैरिव स्थितैः। उपमोपक्रमोत्प्रेक्षायामिवोत्प्रेक्षायामपि निभ शब्दप्रयोगः। भव्यैः शुभैः। स्वशब्दैः। तदीय पदं असेवन्त। नन्द-कुले गवाकृत्या वेदगिरोऽवतीर्य हम्बारवैर्भगवच्चरणसेवामकुर्वन्नित्यर्थः ॥

**अबालिशो बालिशवत्प्रजानां**
**प्रख्यापयन्नात्मनि पारतन्त्र्यम्।**
**न्यदर्शयद्विश्वपतिः पशूनां**
**बन्धे च मोक्षे च निजं प्रभुत्वम् ॥ ७१ ॥**

**अबालिश इति** । अबालिशः अबालः आदिपुरुषत्वात् । बालिशवत् बालेन तुल्य यथा । 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययः 'बालिशौ बालमूर्खयोः' इति वैजयन्ती । आत्मनि स्वस्मिन् । पारतन्त्र्य पशुपालनरूपम् । प्रजानां जनानाम् । प्रख्यापयन् प्रकाशयन् । विश्वपतिः अखिलनायकः कृष्णः । पशूनां ससारिणाम्, 'आत्मानः पशवः प्रोक्ताः सर्वे ससारवर्तिनः' इति पुराणवचनात् । बन्धे मोक्षे च ससरणं ससारादुत्तरणे च । निज आत्मीयम् । प्रभुत्व न्यदर्शयत् उदाहरणमुखेन दर्शितवान् । गोमहिष्यादीनां पशूनां बन्धमोक्षकरणमेव ससारिरूपिणां पशूनां बन्धमोक्षयोस्तस्य प्रभुत्वे उदाहरणमभूदित्यर्थः ॥ ७१ ॥

**आत्मोपमर्देऽप्यनुमोदमाना-**
**दात्माधिकं पालयतश्च वत्सान् ।**
**गावस्तदानीमनघामविन्द-**
**न्वात्सल्यशिक्षामिव वासुदेवात् ॥ ७२ ॥**

**आत्मेति** । तदानीं कृष्णस्य पशुपालनसमये । गावः । आत्मोपमर्देऽपि स्वस्य पदाक्रमणलेहनादिना पीडनेऽपि । अनुमोदमानात् श्लाघमानात् । आत्मनः स्वस्मात् अधिक यथा तथा । वत्सान् पालयतः स्वकीयक्षुत्पिपासादिसमयेऽपि वत्सानेव तृणचर्वणादिना पोषयतश्च । वासुदेवात् कृष्णात् । अनघां वात्सल्यशिक्षां सम्यग्वत्सेषु वात्सल्याभ्यासम् । अविन्दन्निव लेभिर इव । वत्सेषु तत्तन्मातृभ्यः कदाचित्स्तनदशनादौ चरणघातादि कुर्वतीभ्यः स्वक्षुधायां वत्सानविचार्य तृणचर्वणादि कुर्वतीभ्यश्च कृष्णस्यैव अधिक वात्सल्य व्यक्तमासीदित्यर्थः ॥ ७२ ॥

योऽसावनन्तप्रमुखैरनन्तै-
 निर्विश्यते नित्यमनन्तभूमा ।
वैमानिकानां प्रथमः स देवो
 वत्सैरलेलिह्यत वत्सलात्मा ॥ ७३ ॥

**योऽसाविति** । अनन्तभूमा अनवधिकमहिमा । योऽसौ । अनन्त प्रमुखैः अनन्तगरुडविष्वक्सेनादिभिः । अनन्तैः असङ्ख्यैर्नित्यमुक्तैः । नित्य सदा । निर्विश्यते साक्षात्कारेणोपभुज्यते । 'तद्विष्णोः परम पद सदा पश्यन्ति सूरयः' इति श्रुतिः । भगवतः निरतिशयानन्दरूपत्वेन तैः साक्षात्कुर्वद्भिरुपभोग्यता । वैमानिकानां विमानेन चरताम् । 'तेन चरति' इति ठक्प्रत्ययः । प्रथमः प्रवरः आदिमो वा । 'प्रथमौ प्रवरादिमौ' इति वैजयन्ती । स देवः वासुदेवः । वत्सलात्मा वात्सल्यार्द्रहृदय सन् । वत्सैः । अलेलिह्यत पौनःपुन्येनालिह्यत । क्रियासमभिहारे यङि कर्मणि लङ् । विचित्रा भगवतः क्रीडेति भावः ॥ ७३ ॥

महीयसा मण्डितपाणिपद्मं
 दध्यन्नसारेण मधुप्लुतेन ।
दृष्ट्वा ननन्दुः क्षुधयान्वितास्तं
 वत्सानुचर्यासु वयस्यगोपाः ॥ ७४ ॥

**महीयसेति** । वत्सानुचर्यासु वत्सानामनुव्रज्यासु । क्षुधया अन्विता क्षुधायुक्ताः । वयस्यगोपाः सवयसो गोपकुमाराः । महीयसा अतिशयेन महता । मधुप्लुतेन क्षौद्रसिक्तेन । दध्यन्नसारेण दधिसिक्तान्नवरेण । मण्डित पाणिपद्म अलङ्कृतपाणिकमलम् । त कृष्णम् दृष्ट्वा । ननन्दुः नन्दन्ति स्म । वयस्यानां क्षुधासु दध्यन्न दत्वा तान् सतर्पयामासेत्यर्थः ॥ ७४ ॥

**स्वादूनि वन्यानि फलानि तैस्तैः**
**स्निग्धैरुपानीय निदर्शितानि ।**
**रामाय पूर्वं प्रतिपाद्य शेषैः**
**स पिप्रिये सादरभुज्यमानैः ॥ ७५ ॥**

**स्वादूनीति** । सः कृष्णः । स्वादूनि मधुराणि । तैस्तैः । स्निग्धैः गोपकिरातादिभिः । उपानीय आहृत्य । निदर्शितानि इदं मधुरमिदं मधुरमिति प्रदर्शितानि । वन्यानि वनोद्भवानि । फलानि । पूर्वं रामाय प्रतिपाद्य । सादरभुज्यमानैः । शेषैः बलदेवभुक्तशेषैः । पिप्रिये प्रीतोऽभूत् ॥

**ताभ्यां तदा नन्दनिदेशिताभ्यां**
**रक्षावतीं रामजनार्दनाभ्याम् ।**
**विशेषभोग्यामभजद्विभूतिं**
**बृन्दावनं व्यापृतधेनुबृन्दम् ॥ ७६ ॥**

**ताभ्यामिति** । तदा तस्मिन् काले । व्यापृतधेनुवृन्दं सचरद्गोग्रीनिकुरुम्बम् । बृन्दावनम् नन्दनिदेशिताभ्यां नन्दनियुक्ताभ्याम् । ताभ्यां रामजनार्दनाभ्याम् । रक्षावतीं वातोष्णमृगशकुन्तकिरातादिभ्यस्त्राणवतीम् । विशेषभोग्यां सौरभ्यमाधुर्याद्याधिक्यादतिशयेनोपभोग्याम् । विभूतिं पुष्पफलादिसमृद्धिम् । अभजत् प्राप ॥ ७६ ॥

**अगाधकासारमहीनशष्प-**
**मतीक्ष्णसूर्यं तदचण्डवातम् ।**

प्रच्छायनिद्रायितधेनुवत्सं
प्रौढे निदाघेऽपि बभूव भोग्यम् ॥ ७७ ॥

**अगाधेति** । अगाधा अतलस्पर्शिनः कासाराः सरांसि यस्मिंस्तथोक्तम् । अहीनशष्प समृद्धबालतृणम् । अतीक्ष्णसूर्यम् अतीव्रतपनम् । अचण्डवात ग्रीष्मकालीयेन महावातेन रहितम् । 'ग्रीष्मे चण्डानिलोऽनिलः' इति वैजयन्ती । प्रच्छायनिद्रायितधेनुवत्स प्रकृष्टा च्छाया येषु तानि प्रच्छायानि वटमूलादीनि । 'प्रादिभ्यो धातुजस्य-' इत्यादिना बहुव्रीहिः । तेषु निद्रायिता निद्रावन्तो भूता धेनवो वत्साश्च यस्मिन् । लोहितादेराकृतिगणत्वान्निद्राशब्दात्क्यष् । 'गत्यर्थाकर्मक-' इत्यादिना कर्तरि क्तः । निद्राशब्दो वृत्तिविषये तद्वति वर्तत इति पदमञ्जरीकारादयः । अथवा निद्रातीति निद्रः । 'आतश्चोपसर्गे' इति कर्तरि कप्रत्ययः । ततः क्यष् । तत् बृन्दावनम् । प्रौढे निदाघेऽपि कठोरे ग्रीष्मेऽपि । भोग्य कासारशोषादिदोषाभावादुपभोग्यम् । बभूव ॥ ७७ ॥

न व्याधिपीडा न च दैत्यशङ्का
नासीद्गवां व्याघ्रभयं च तस्मिन् ।
स्वबाहुकल्पेन बलेन सार्धं
नारायणे रक्षति नन्दलक्ष्मीम् ॥ ७८ ॥

**न व्याधीति** । तस्मिन् बृन्दावने । नारायणे कृष्णे । स्वबाहुकल्पेन स्वबाहुतुल्येन तद्वत्सहकारिणा । बलेन बलदेवेन सार्धम् । नन्दस्य लक्ष्मीं गोधनादिरूपाम् । रक्षति सति । गवां व्याधिपीडा नासीत् । दैत्यशङ्का च असुरैर्गवादीनामपहारशङ्का च । नासीत् । गवां व्याघ्रभय च भक्षकेभ्यो व्याघ्रादिदुष्टसत्वेभ्यो भयं च । नासीत् ॥ ७८ ॥

निरीतयस्ते निरपायवाञ्छा
 निःश्रेयसादप्यधिकप्रमोदाः ।
प्रपेदिरेऽपूर्वयुगानुभूतिं
 गोपास्तदा गोप्तरि वासुदेवे ॥ ७९ ॥

**निरीतय इति** । तदा । वासुदेवे । गोप्तरि सति । निरीतयः 'अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः । अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः' इत्युक्तरूपेतिबाधारहिताः । निरपायवाञ्छाः अभ्रंशवाञ्छाः सफलाभिलाषाः । अत एव अनर्थनिवृत्तेरर्थप्राप्तेश्च पुरुषार्थस्य पौष्कल्येन, निश्श्रेयसादपि अपवर्गादपि । अधिकप्रमोदा अतिशयितहर्षाः । ते गोपाः । अपूर्वयुगानुभूतिं प्रपेदिरे युगचतुष्टयेऽप्येवमवस्थानस्य दुर्लभत्वात्तद्विलक्षणालौकिकयुगानुभव प्रापुः ॥ ७९ ॥

वत्सानुचर्याचतुरस्य काले
 वंशस्वनैः श्रोत्रसुधां विधातुः ।
गतागतप्राणदशामविन्द-
 न्गोपीजनास्तस्य गतागतेषु ॥ ८० ॥

**वत्सेति** । गोपीजनाः । वत्सानां अनुचर्यायां अनुचरणे चतुरस्य क्षमस्य । काले उचितसमये । वंशस्वनैः वेणुनादैः । श्रोत्रसुधां कर्णामृतम् । विधातुः । तृन्प्रत्ययोऽयमिति षष्ठीप्रतिषेधाद्वितीया । तस्य कृष्णस्य । गतागतेषु गमनागमनेषु । भावे क्तः । गतागतप्राणदशां यथासङ्ख्य गमने गतप्राणामागमने आगतप्राणां च दशाम् । अविन्दन् प्रापुः । क्षणमपि तद्विरह न सेहिर इत्यर्थः ॥ ८० ॥

आघ्रातवर्त्मानमरण्यभागे-
ष्वारण्यकैराश्रितधेनुभावैः ।
केनापि तस्यापहृतं किरीटं
प्रत्याहरन्प्रैक्षत पत्रिनाथः ॥ ८१ ॥

**आघ्रातेति ।** अरण्यभागेषु अरण्यप्रदेशेषु । आश्रितधेनुभावैः धेनुभावमाश्रित्य चरद्भिः । आरण्यकैः अरण्यगेयैर्वेदान्तभागैः । आघ्रातवर्त्मान आघ्रातमार्गं, कृष्णमिति शेषः । नन्दव्रजे धेनुभावमाश्रित्य कृष्णसेवार्थं चरन्तो वेदान्ताः कृष्णे परब्रह्मणि तात्पर्यगौरवात्तस्य गमनमार्गमप्याजिघ्रन्निति भावः । तस्य कृष्णस्य । केनापि दैत्येन । अपहृतम् । किरीटं मकुटम् । प्रत्याहरन् कृष्णायार्पयितुं ततो दैत्याद्गृहीत्वा पुनराहरन् । पत्रिनाथो गरुडः । प्रैक्षत अपश्यत् । कृष्णाय मकुटमर्पयितुमेव तमन्विष्यागच्छस्तं दृष्टवानित्यर्थः । पुरा क्षीरार्णवे निद्राणस्य पुरुषोत्तमस्य किरीटं बलिनापहृतं गरुडेन पुनस्ततो गृहीत्वा कृष्णावतारे प्रत्यर्पितमिति पौराणिकी कथा ॥ ८१ ॥

देवस्य दुग्धोदशयस्य दैत्या-
द्वैरोचनाद्व्यालभुजोपनीतः ।
कृष्णस्य मौलौ कृतबर्हचूडे
न्यस्तः किरीटो निबिडीबभूव ॥ ८२ ॥

**देवस्येति ।** वैरोचनात् विरोचनसबन्धिनस्तत्पुत्रात् । दैत्यात् बलेः । विरोचनशब्दात्सबन्धसामान्येऽण् प्रत्ययः । व्यालभुजा सर्पभोजिना गरुडेन । उपनीतः । दुग्धोदशयस्य क्षीरोदशायिनः परमपुरुषस्य । किरीटः ।

'किरीटं पुनपुंसकम्' इत्यनुशासनात्पुंलिङ्गता । कृतबर्हचूडे रचितबर्हावतंसे । कृष्णस्य । मौलौ शिरसि । न्यस्तः निहितः सन् । निबिडीबभूव क्षीरोदशायिमौल्यनुगुणाकारतया स्वतः अनिबिडोऽपि कृष्णमौल्युचितमाकारमाश्रित्य निबिडो बभूव । "अभूततद्भावे—" इत्यादिना च्विप्रत्ययः ॥ ८२ ॥

समाहितैरग्निषु यायजूकै-
राधीयमानानि हवींषि भोक्ता ।
भक्तैकलभ्यो भगवान्कदाचि-
त्पत्नीभिरानीतमभुङ्क्त भोज्यम् ॥ ८३ ॥

**समाहितैरिति** । समाहितैः एकाग्रचित्तैः । यायजूकैः इज्याशीलैः । 'इज्याशीलो यायजूकः' इत्यमरः । अग्निषु आहवनीयादिषु । आधीयमानानि । हवींषि चरुपुरोडाशादीनि । भोक्ता भोजनशीलवान् । ताच्छील्ये तृन्प्रत्ययः । अत एव तद्योगे द्वितीया । भक्तैकलभ्यः भक्तमात्रलभ्यः । शिवभागवतवत्समासः । भगवान् कृष्णः । कदाचित् जातु । पत्नीभिः केषांचिदारब्धयज्ञानामृषीणां पत्नीभिः । आनीतं उपहृतम् । भोज्यं पायसादिकम् । अभुङ्क्त भुङ्क्ते स्म । भगवान्विधिवदाहवनीयादिषु हुतं चरुपुरोडाशादि हविरेव भुङ्क्ते इति स्वभावः । तदपि यज्वभिरेव होतव्यं न पत्नीभिः । 'न पत्नी जुहुयात्' इति प्रतिषेधात् । अथापि भक्तैकपक्षपातित्वात्प्रत्यक्षमेव पत्नीभिरानीतं यत्किंचिद्भोज्यमात्रं भुक्तवानिति भावः । इयं कथा भागवते वर्णिता । विभक्तधनेषु 'विभक्ता भ्रातरः' इतिवत्समाहितचित्तैरित्यर्थे समाहितैरित्युत्तरपदलोपेन प्रयोग इत्याहुः ॥ ८३ ॥

**करांबुजस्पर्शनिमीलिताक्षा-**
**नामर्शनैराकलितार्धनिद्रान् ।**
**वत्साननन्याभिमुखान्स मेने**
**प्रह्वाकृतीन्भक्तिभरावनम्रान् ॥ ८४ ॥**

**कराम्बुजेति** । स कृष्णः । कराम्बुजस्पर्शेन । निमीलिताक्षान् सुखाज्झटिति निर्मीलितलोचनान् । आमर्शनैः कराम्बुजेन समन्तात्परामर्शैः आकलितार्धनिद्रान् । अनन्याभिमुखान् स्वाभिमुखतयैवावतिष्ठमानान् । प्रह्वाकृतीन् निद्रासुखेनावनताकृतीन् । वत्सान् । भक्तिभरेण भक्त्यतिशयेन 'अप्यथातिशयो भरः' इत्यमरः । अवनम्रान् । मेने तथोत्प्रैक्षतेत्यर्थः । वत्सानां स्वभाव ईदृश इति **स्वभावोक्तिरलङ्कारः** ॥ ८४ ॥

**रोमन्थफेनाञ्चितसृक्विभागै-**
**रस्पन्दनैरर्धनिमीलिताक्षैः ।**
**अनादृतस्तन्यरसैर्मुकुन्दः**
**कण्डूयितैर्निर्वृतिमाप वत्सैः ॥ ८५ ॥**

**रोमन्थेति** । मुकुन्दः । रोमन्थफेनाञ्चितसृक्विभागैः रोमन्थो गोमहिष्यादीनां निगीर्णस्य पुनः पुनरुद्गीर्य भक्षणं तदुद्गतेन फेनेनाञ्चिताः पूजिताः । 'अञ्चेः पूजायाम्' इतीडागमः । सहिता इति यावत्, तथाभूताः सृक्विभागा ओष्ठप्रान्तभागा येषां तैः । 'प्रान्तावोष्ठस्य सृक्विणी' इत्यमरः । कण्डूयितैः स्वेन कृतकण्डूयनैः । अत एव कण्डूयनलाभात्, अस्पन्दनैः स्पन्दरहितैः । अर्धनिमीलिताक्षैः कण्डूयनसुखादर्धनिमीलितलोचनैः । अनादृतस्तन्यरसैः । वत्सैः । निर्वृतिं सुखम् । आप । वत्सेषु वात्सल्यातिशयात्कण्डूयनेन तेषां सुखात्स्वयमपि सुखं प्रापेत्यर्थः ॥ ८५ ॥

सिषेविरे शाद्वलितान्प्रदेशा-
न्कृष्णस्य धाम्ना मणिमेचकेन ।
वसुंधरायामपि केवलायां
व्यापारयन्तो वदनानि वत्साः ॥ ८६ ॥

**सिषेविर इति** । वत्साः । मणिमेचकेन नीलमणिश्यामलेन । कृष्णस्य । धाम्ना त्विषा । शाद्वलितान् शाद्वलीकृतान् शादेन नवतृणेन हरिती-कृतान् । 'शाद्वलः शादहरिते' इत्यमरः । केवलाया तृणरहितायामपि । वसुधरायाम् । वदनानि । व्यापारयन्तः सन्तः, कृष्णधाम्नि तृणभ्रमा-दिति भाव. । सिषेविरे सेवन्ते स्म ॥ ८६ ॥

नवप्रसूताः स तदा वनान्ते
पयस्विनीरप्रतिमानदोहाः ।
परिभ्रमश्रान्तपदानदूरा-
त्प्रत्यागतान्पाययते स्म वत्सान् ॥ ८७ ॥

**नवप्रसूता इति** । स कृष्णः । नवं यथा तथा प्रसूताः । अप्रति-मानदोहाः असदृशदोहाः बहुक्षीरा इति यावत् । पयस्विनीः दोग्ध्रीः । वनान्ते । परिभ्रमश्रान्तपदान् उल्ललनेन श्रान्तचरणान् । अदूरात्प्रत्या-गतान् समीप एव परिक्रम्य ततो गृहं प्राप्तान । वत्सान् । पाययते स्म दोहं प्रतिषिध्य वत्सानेव पाययामास । 'गतिबुद्धि—' इत्यादिना द्विकर्मकता ॥ ८७ ॥

निविश्य मूलेषु वनद्रुमाणां
निद्रायितानां निजतर्णकानाम् ।

अङ्गानि गाः सादरमालिहन्ती-
रमंस्त संभाव्यगुणाः स्वमातुः ॥ ८८ ॥

**निविश्येति** । कृष्ण । वनद्रुमाणां मूलेषु । निविश्य उपविश्य । निद्रायिताना निद्राणानाम् । निजतर्णकानां आत्मीयानां सद्योजातवत्सानाम् । अङ्गानि । सादरम । आलिहन्तीः समन्तांल्लिहन्तीः । गाः । स्वमातुर्यशोदाया अपि । सम्भाव्यगुणाः तयापि श्लाघनीयवात्सल्यगुणाः । अमस्त मन्यते स्म । 'सद्योजातस्तु तर्णकः' इत्यमरः ॥ ८८ ॥

स नैचिकीः प्रत्यहमातपान्ते
प्रत्युक्तघोषा इव वत्सनादैः ।
मधूनि वंशध्वनिभिः प्रयच्छ-
न्निनाय भूयोऽपि निवासभूमिम् ॥ ८९ ॥

**स इति** । सः कृष्णः । प्रत्यह प्रतिदिनम् । आतपान्ते सायसमये । वंशध्वनिभिः वेणुनादैः । मधूनि श्रोत्रपेयानि । प्रयच्छन्सन् । वत्सनादैः प्रत्युक्तघोषा इव गृहसामीप्ये सति गृहबद्धान्वत्सानुद्दिश्य घोषे कृते तेषां शब्दैः प्रत्युत्तरितघोषा इव स्थिताः । नैचिकीः उत्तमगवीः । 'उत्तमा गोषु नैचिकी' इत्यमरः । भूयोऽपि । निवासभूमि गोष्ठम् । निनाय ॥ ८९ ॥

समाव्रजान्विश्वपतिर्व्रजान्तं
गोभिः समं गोपविलासिनीनाम् ।
उल्लासहेतुः स बभूव दूरा-
दुद्यन्विवस्वानिव पद्मिनीनाम् ॥ ९० ॥

**समाव्रजन्निति** । गोभिः समम् । व्रजान्तं गोष्ठसमीपम् । 'अन्तोऽस्त्र्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके' इति वैजयन्ती । दूरात्समाव्रजन् । विश्वपतिः कृष्णः । दूरादुद्यन् आविर्भवन्निव । विवस्वान् सूर्यः । पद्मिनीनामिव । गोपविलासिनीनाम् । उल्लासहेतुः प्रमोदहेतुः । बभूव । सूर्यपक्षे गावः किरणाः, उल्लासो विकासः । व्रजान्तस्थाने तु प्राचीभागप्रतीतिरनुसर्तव्या ॥ ९० ॥

निवर्तयन्गोकुलमात्तवंशो
मन्दायमाने दिवसे मुकुन्दः ।
प्रियादृशां पारणया स्वकान्त्या
बर्हावृतं व्यातनुतेव विश्वम् ॥ ९१ ॥

**निवर्तयन्निति** । दिवसे । मन्दायमाने मन्दीभवति सति । लोहितादित्वात्क्यष् । आत्तवंशः गृहीतवेणुवाद्यः । गोकुलं निवर्तयन्मुकुन्दः । प्रियादृशां गोपीलोचनानां पारणया तृप्तिकारिण्या । स्वकान्त्या । विश्वं बर्हावृतमिव । व्यातनुत अकरोत ॥ ९१ ॥

बालं तरुण्यस्तरुणं च बाला
स्तमन्वरज्यन्त समानभावाः ।
तदद्भुतं तस्य विलोभनं वा
तस्यैव सर्वार्हरसात्मता वा ॥ ९२ ॥

**बालमिति** । बालं तं कृष्णम् । तरुण्यः । तरुणं तम् । बालाश्च । समानभावाः वयोवैषम्येऽपि समानवयस्का इव तुल्यभावाः सत्यः । अन्वरज्यन्त रज्यन्ते स्म । अत्र वनितानां तं प्राप्य रक्ततापत्तिराख्या-

यत इति इत्थभूताख्याने अनुशब्दः । अत एव ' लक्षणेत्थभूताख्यान-' इत्यादिना तस्य कर्मप्रवचनीयसञ्ज्ञतया तद्योगे द्वितीया । तस्य बाल्यदशायां तरुण्यः तारुण्यदशायां बालाश्च समानवयस्का इव तस्मिन्नरज्यन्तेत्यर्थः । अद्भुत अन्यत्रैवमदर्शनादाश्चर्यम् । तत् अननुरूपवयसामपि स्त्रीणामनुरञ्जनम् । तस्य । विलोभन वा तत्तदनुरूपाकारप्रदर्शनादिना प्रलोभनं वा । तस्यैव । सर्वार्हरसात्मना वा सर्वार्हः सर्वोचितः सर्वेषामास्वादनीयो रसः ' रसो वै सः ' इति श्रुतिसिद्धो निरतिशयानन्द तद्रूपता वा, इत्थमिति निर्धारयितु न शक्यत इत्यर्थः । कार्यकारणयोरभेदोपचारात् तद्विलोभनमित्यादिसामानाधिकरण्यम् ॥ ९२ ॥

**अवेदिषातां पृथुकौ पितृभ्यां**
**तारुण्यपूर्णौ तरुणीजनेन ।**
**वृद्धौ पुरावृत्तविशेषविद्भिः**
**क्लृप्तेन्द्रजालाविव रामकृष्णौ ॥ ९३ ॥**

**अवेदिषातामिति** । रामकृष्णौ । क्लृप्तेन्द्रजालौ ऐन्द्रजालिकाविव । पितृभ्या यशोदया नन्देन च । पृथुकौ अर्भकौ । अवेदिषातां अवगतौ । 'विद ज्ञाने' इति धातोः कर्मणि लुङ् । तरुणीजनेन । तारुण्यपूर्णौ अवेदिषाताम् । पुरावृत्तविशेषविद्भिः भगवदवताराविमाविति इतिहासविशेष जानद्भिः । पुराणपुरुषतया वृद्धौ अवेदिषाताम् । यथैक एवैन्द्रजालिको नानारूपेण प्रतीयते, तथा गृहीतृबुद्ध्यादिभेदेन बालादिरूपतया प्रतीताविल्यर्थः । **उपमानुप्राणित उल्लेखालंकारः** । एकस्यापि निमित्तवशादनेकधा ग्रहणमुल्लेखः ॥ ९३ ॥

अथापदानं मदनस्य दातु-
मादातुमालोकयतां मनांसि ।
नवं वयो नाथसमं प्रपेदे
गुणोत्तरं गोपकुमारिकाभिः ॥ ९४ ॥

**अथेति** । अथ कृष्णस्य यौवनप्रादुर्भावानन्तरम् । गोपकुमारिकाभिः नन्दव्रजजाताभिः अप्सरोऽवताररूपाभिः । मदनस्य । अपदान पराक्रमम् । 'अपदान पराक्रमः' इति वैजयन्ती । दातुम् । आलोकयतां मनांसि । आदातुं अपहर्तुं च । गुणोत्तरं कान्तिसौन्दर्यसौकुमार्यादि-गुणभूयिष्ठम् । नाथसम कृष्णस्यानुरूपम् । नव वयः प्रथमयौवनम् । प्रपेदे प्राप्तम् । कर्मणि लिट् ॥ ९४ ॥

अनङ्गसिन्धोरमृतप्रथिम्ना
रसस्य दिव्येन रसायनेन ।
महीयसीं प्रीतिमवाप तासां
योगी महान्यौवनसंभवेन ॥ ९५ ॥

**अनङ्गेति** । महान् योगी कृष्णः । 'एवमुक्त्वा महाबाहुर्महायोगे-श्वरो हरिः । यत्र योगेश्वरः कृष्ण –' इत्यादिशास्त्रात् । अनङ्गसिन्धोः मदनसागरस्य । अमृतप्रथिम्ना अमृतभूमरूपेण अमृतवत्सारभूतेनेत्यर्थः । रसस्य शृङ्गाररसस्य । दिव्येन रसायनेन दिव्यरसायनवत्सद्यो रसोदय-करेणेत्यर्थः । तासां गोपकुमारिकाणां स्वार्थमवतीर्णानाम् । यौवनसंभ-वेन यौवनोदयेन । महीयसीं महत्तराम् । प्रीतिम् । अवाप । महान्योगी

गोपिकासंभोगमिच्छति स्मेति विरोधः, प्राचीनतदीयतपःफलप्रदानार्थत्वेन तत्समाधान चेति **विरोधाभासालङ्कारः** ॥ ९५ ॥

**विजृम्भमाणस्तनकुड्मलानां**
**व्यक्तोन्मिषद्विभ्रमसौरभाणाम् ।**
**मधुव्रतत्वं मधुराकृतीनां**
**लेभे लतानामिव वल्लवीनाम् ॥ ९६ ॥**

**विजृम्भमाणेति** । सः कृष्णः । विजृम्भमाणौ स्तनौ कुड्मले इव यासां, लतापक्षे स्तनसदृशानि कुड्मलानि यासामिति समासः । व्यक्त स्फुट उन्मिषन् विकसन् विभ्रम. सौरभमिव यासाम्, पक्षे पूर्ववन्मध्यमपदलोपिसमास । मधुराकृतीनां मनोज्ञरूपाणाम् । वल्लवीनां लतानामिव । मधुव्रतत्वम् । लेभे प्रपेदे । मधुकरो वल्लरीरिव वल्लवीरुपभोक्तु प्रवृत्त इत्यर्थः ॥ ९६ ॥

**अतिप्रसङ्गादवधीरयन्त्या**
**प्राचीनया संयमितो नियत्या ।**
**पाञ्चालकन्यामिव पञ्चभुक्तां**
**धर्मः सतीराद्दत तादृशीस्ताः ॥ ९७ ॥**

**अतिप्रसङ्गादिति** । तादृशीः कृष्णमभिसरन्तीः । ताः । अतिप्रसङ्गात् अवधीरयन्त्या एकत्रातिप्रवृत्तिर्जातेति अन्यत्रापि प्रसङ्गः अतिप्रसङ्गः ततः क्षिपन्त्या । प्राचीनया नियत्या प्रागभर्वायेन निजतपोरूपेण कर्मणा । संयमितः नियमितः । धर्मः । पञ्चभिः पाण्डवैः भुक्ताम् । पाञ्चालकन्यां द्रौपदीमिव । सतीः । आदृत पतिव्रता इत्याद्रियते स्म । प्रागभ-

र्वायकर्मबलात्कृष्णस्य स्वस्वपतिरूपानेकसंयोगेऽपि तासां धर्मपथभ्रंशो नासीदित्यर्थः । आदृतेत्यत्राङ्पूर्वात् दृङ् आदरे इति धातोर्लुङ् ॥ ९७ ॥

**दिशागजानामिव शाकराणां**
**शृङ्गाग्रनिर्भिन्नशिलोच्चयानाम् ।**
**स तादृशा बाहुबलेन कण्ठा-**
**न्निपीड्य लेभे पणितेन नीलाम् ॥ ९८ ॥**

**दिशागजानामिति** । सः कृष्णः । दिशागजानां दिग्गजानामिव । शृङ्गाग्रनिर्भिन्नशिलोच्चयानां विषाणाग्रविदलितपर्वतानाम । शाकराणां वृषभाणाम । 'शाकरो वृषभे च्छन्दोविशेषे शाकरं मतम्' इति विश्वः । कण्ठान् । तादृशा तथाभूतेन, असुरमर्दनादिषु प्रसिद्धेन । बाहुबलेन निपीड्य, कण्ठनिपीडनेन तान्मारयित्वेति यावत् । पणितेन वृषभमर्दनरूपेण शुल्केन । नीलां नाम कन्यां लेभे । एव हरिवंशे कथा—विदेहनगरे यशोदानुजः कुम्भको नाम गवांपतिरासीत् । तस्य व्रजे कालनेमेरसुरस्य सुताः सप्त प्राग्भगवता निर्जिताः पूर्ववैरमनुस्मृत्य कृष्णापचिकीर्षया वृषभरूपेण न्यवसन् । तैश्च गोकुलवित्रासनसस्यभक्षणाद्युपद्रवेषु क्रियमाणेषु स्वयं दमयितुमशक्येषु च तेषु य एषां दमयिता तस्मै स्वकन्यां नीलां दास्यामीति कुम्भकः प्रतिजज्ञे । तत्र च कदाचित्कृष्णः समागत्य तान्मारयित्वा नीलां जग्राहेति ॥ ९८ ॥

**करेण दम्भोलिकठोरतुङ्गा-**
**न्देहान्पृथून्दानवदुर्वृषाणाम् ।**
**विमृश्य नूनं विदधे मुकुन्दः**
**प्रियास्तनस्पर्शविहारयोग्याम् ॥ ९९ ॥**

**करेणेति**। मुकुन्दः। दानवदुर्वृषाणां असुररूपाणां दुष्टवृषभाणाम्। दम्भोलिकठोरतुङ्गान् वज्रकठिनानुन्नतांश्च। पृथून् देहान्। करेण विमृद्य नूनम्। प्रियाया नीलायाः स्तनस्पर्शविहारस्य योग्यां अभ्यासम्। विदधे। 'योग्याभ्यासार्कयोषितोः' इति विश्वः। कठिनानां वृषभवपुषां विमर्दनमतिकठिननीलाकुचस्पर्शसहनाय प्रथमाभ्यास इवाभूदित्युत्प्रेक्षा॥

**आत्मीयपर्यङ्कभुजङ्गकल्पा-**
**वक्षेप्यरक्षापरिघौ पृथिव्याः।**
**नीलोपधानीकरणात्स मेने**
**भूयिष्ठधन्यौ भुजपारिजातौ॥ १०० ॥**

**आत्मीयेति**। स कृष्णः। आत्मीयपर्यङ्कभुजङ्गकल्पौ स्वकीयमञ्चभुजङ्गस्य शेषस्य सदृशौ। पृथिव्याः। अक्षेप्यरक्षापरिघौ अप्रतिक्षेप्यरक्षार्थार्गलरूपौ। 'परिघो योगभेदेऽस्त्रे मुद्गरेऽर्गलघातयोः' इति विश्वः। भुजपारिजातौ पारिजाताविव भुजौ। नीलाया आश्लेषसमये उपधानीकरणात्। भूयिष्ठधन्यौ भृशं कृतार्थौ। मेन इति तस्यां प्रेमातिशयोक्तिः॥

**रागादिरोगप्रतिकारभूतं**
**रसायनं सर्वदशानुभाव्यम्।**
**आसीदनुध्येयतमं मुनीनां**
**दिव्यस्य पुंसो दयितोपभोगः॥ १०१ ॥**

**रागादीति**। दिव्यस्य दिवि परमपदे भवस्य। पुंसः कृष्णस्य। दयितोपभोग एव। सर्वदशानुभाव्य न तु प्रसिद्धरसायनवत्समयविशेष प्रतीक्ष्य सेव्यम्। रागादिरोगाणां प्रतीकारभूत भेषजत्वं प्राप्तम्। रसायन

दिव्यौषधम्। मुनीनां ऋषीणामपि। अनुध्येयतमं अतिशयेनानुध्येय आसीत्। अत्र दयितोपभोगे प्रसिद्धरसायनवैलक्षण्यविशिष्टरसायनत्वारोपरूपो रूपकभेदः। स च विरोधाभासगर्भः। लोके ह्युपभोगो भाव्यमानो भावुकस्योद्दीपनविभावतया रागादिकमुत्पादयति। अयं तु भाव्यमानो रागादिकं क्षपयतीति विरोधस्य भगवच्चरितानुध्यानरूपतया तत्समाधानस्य च सत्त्वात्। रागादिरोगप्रतिकारभूतमिति विशेषणेन 'भजते तादृशीः क्रीडा याः श्रुत्वा तत्परो भवेत्' इति भागवतोक्तरीत्या भगवतो गोपिकासंभोगस्य लोकानुग्रहार्थत्वमपि दर्शितम्। रागिणो हि संभोगपदश्रवणे स्वयमेव कुतूहलिनः प्रवर्तन्ते। तच्च श्रवणं भगवद्रूपविषयमाहात्म्यादन्तःकरणशुद्धिमाधाय रागादिकं क्षपयति। अत एव विषयमाहात्म्यान्मुक्तिजनकतया मुनीनामप्यनुध्येयता॥ १०१॥

**अनुद्रुता नूनमनङ्गबाणैः**
**सुलोचना लोचनभागधेयम्।**
**प्रत्यग्रहीषुः प्रतिसंनिवृत्तं**
**त्यक्तेतरैरक्षिभिरात्मना च॥ १०२॥**

**अनुद्रुता इति**। सुलोचनाः गोपसुदृशः। प्रतिसंनिवृत्तं लीलां लब्ध्वा विदेहदेशात्प्रत्यावृत्तम्। लोचनानां भागधेयं भाग्यभूतं तं कृष्णम्। नूनम्। अनङ्गबाणैः। अनुद्रुताः अनुसृताः सत्यः। त्यक्तेतरैः विसृष्टविषयान्तरैः। अक्षिभिः। आत्मना मनसा च, त्यक्तेतरेणेति वचनविपरिणामेन विशेषणानुषङ्गः। प्रत्यग्रहीषुः प्रत्युद्गमनेन अङ्गीचक्रुः। यथा देशान्तरात्प्रतिसंनिवृत्तं बन्धुं तदीयाः स्वकीयैः कैश्चिदनुगन्तृभिः संभूताः प्रत्युद्गच्छन्ति, एवं कृष्णं लोचनैः प्रत्युद्गच्छन्त्योऽङ्गना मदनबाणैरनुद्रुताः

प्रत्युज्जग्मुरिति मदनबाणानामपि तदनुगामितया प्रत्युद्गन्तृत्वमुत्प्रेक्ष्यते। तत्र च निमित्तं मदनबाणप्रेरितानां तासां लोचनान्तप्रत्युत्पतनानन्तर कृष्णस्यापि मदनबाणविद्धतेति भावः। यद्वा यथा कैश्चिद्बाधकैरनुद्रुता बाधपरिहाराय जवाद्गत्वा कंचन समर्थं शरणं गृह्णन्ति, एवं तद्विश्लेष-समये मदनबाणैर्बाधकैरनुद्रुता. सुलोचनास्त प्रत्यावृत्तमुपलभ्य तद्बाध-निवर्तनाय शरणं जग्मुरिति श्लोकतात्पर्यार्थ. ॥ १०२ ॥

व्रजोपकण्ठे विबुधानुभाव्यो
गोपीजनैरात्मगुणावदातैः।
समावृतो नन्दसुतश्चकाशे
तारागणैरिन्दुरिवान्तरिक्षे ॥ १०३ ॥

**व्रजेति**। विबुधानुभाव्यः विदुषां ध्येयः। इन्दुपक्षे प्रथमा पिबते वह्निरित्यादिक्रमेण देवानां निषेव्य·। नन्दसुत. कृष्णः। व्रजोपकण्ठ गोकुलसमीपे। आत्मगुणावदातै स्वस्य पुण्यश्लोकत्वादिगुणैर्हेतुभि अ-भिसरणे क्रियमाणेऽपि विशुद्धै·। तारापक्षे आत्मगुणैर्निजकान्तिभिरिव सितैः। 'अवदातः सिते पीते विशुद्धे प्रवरेऽपि च' इति विश्व। गोपी-जनै·। समावृतः सन्। अन्तरिक्षे। तारागणैः। समावृतः इन्दुरिव। चकाशे ॥ १०३ ॥

हत्वा सयूथं तृणराजषण्डे
रामाच्युतौ रासभदैत्यमुग्रम्।
अतोषयेतां भृशमात्मभृत्या-
न्स्वाद्यैः सुधापिण्डनिभैः फलौघैः॥ १०४ ॥

**हत्वेति** । रामाच्युतौ । तृणराजषण्डे तालवने । 'तृणराजाह्वयस्तालः' इत्यमरः । उग्रं क्रूरम् । सयूथ यूथेन रासभरूपेण बन्धुवर्गेण सहितम् । रासभदैत्य रासभरूपधारिणं धेनुकाख्य दैत्यम् । हत्वा धेनुकं रामस्तद्बन्धुवर्गमच्युत इत्येवं प्रकारेण हत्वा । स्वाद्यैः स्वादार्हैरतिमधुरैः । अत एव, सुधापिण्डनिभैः अमृतपिण्डतुल्यै. । फलौघैः फलबृन्दैः, धेनुकाधिष्ठिततालवनोद्भवै । आत्मभृत्यान् आत्मानुचरान् गोपालकादीन् । भृशं अतोषयेतां अत्यन्त तुष्टानकुरुताम् ॥ १०४ ॥

**कदाचिदासादितगोपवेषः**
**क्रीडाकुले गोपकुमारबृन्दे ।**
**स्कन्धेन संगृह्य बलं बलीया-**
**न्दैत्यः प्रलम्बो दिवमुत्पपात ॥ १०५ ॥**

**कदाचिदिति** । आसादितगोपवेषः स्वीकृताभीराकारः, रन्ध्रान्वेषी रामकृष्णयोरनुचरेषु पर्यटन् । बलीयान अतिशयेन बली । प्रलम्बो नाम दैत्य. । कदाचित् । गोपकुमाराणां बृन्दे । क्रीडाकुले हरिणाक्रीडनाख्यक्रीडाव्यग्रे सति । बल स्कन्धेन सगृह्य, स्वयमपि क्रीडां प्रविश्य स्वय बलभद्रेण निर्जित इति तद्वयाजेन त स्कन्धेन गृहीत्वा । दिव अन्तरिक्ष प्रति । उत्पपात ॥ १०५ ॥

**पपात भूमौ सहसा स दैत्य-**
**स्तन्मुष्टिना ताडितशीर्णमौलिः ।**
**महेन्द्रहस्तप्रहितेन पूर्वं**
**वज्रेण निर्भिन्न इवाचलेन्द्रः ॥ १०६ ॥**

**पपातेति**। स दैत्यः प्रलम्बनामा। तन्मुष्टिना दिव्युत्पतनानन्तरमसुर इति ज्ञात्वा तस्य बलदेवस्य मुष्टिना। ताडितः अभिहतः ततः शीर्णमौलिश्च सन्। पूर्वं पर्वतानां पक्षच्छेदसमये। महेन्द्रहस्तप्रहितेन इन्द्रकरविसृष्टेन। वज्रेण। निर्भिन्नः। अचलेन्द्रः पर्वतवर इव। सहसा। भूमौ। पपात ॥ १०६ ॥

**स्ववाससा क्लृप्तकलङ्कलक्ष्मीः**
**कान्त्या दिशश्चन्द्रिकयेव लिम्पन्।**
**रराज रामो दनुजे निरस्ते**
**स्वर्भानुना मुक्त इवोडुराजः ॥ १०७ ॥**

**स्ववाससेति**। दनुजे प्रलम्बासुरे। निरस्ते सति। स्ववाससा स्वकीयेन नीलाम्बरेण। क्लृप्तकलङ्कलक्ष्मीः कृतकलङ्कशोभः। कान्त्या देहकान्त्या। चन्द्रिकयेव। दिशो लिम्पन्। रामः। स्वर्भानुना राहुणा। मुक्तः ग्रसनानन्तरं विसृष्टः। उडुराजः चन्द्र इव। रराज। क्लृप्तकलङ्कलक्ष्मीरित्यत्र क्लृप्ताः कलङ्कस्य लक्ष्म्यो यस्मिन्निति शोभाबहुत्वाभिप्रायेण व्याख्येयम्। अन्यथा लक्ष्मीशब्दस्यैकवचनान्तस्य उरःप्रभृतिषु पाठात्समासान्तनियमः स्यात् ॥ १०७ ॥

**विनैव रामेण विभुः कदाचि-**
**त्संचारयन्धेनुगणं सवत्सम्।**
**वनश्रिया दूरविलोभिताक्षः**
**कंचिद्ययौ कच्छमदृष्टपूर्वम् ॥ १०८ ॥**

अथ कालियमर्दनमुपोद्घातेन प्रस्तौति— **विनैवेति**। कदाचित्

एकदा । रामेण बलदेवेन विनैव । सवत्सं वत्ससहितम् । धेनुगणम् । सचारयन् । विभुः वनश्रिया काननश्रिया । दूरविलोभिताक्षः दूरे प्रलोभितलोचनः सन् । अदृष्टपूर्वं पूर्वमदृष्टम् । सुप्सुपेति समासः । कच्चित्कच्छ दूरस्थ यमुनायाः कच्चिदनूपदेशम् । ययौ । 'जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः' इत्यमरः ॥ १०८ ॥

**यदृच्छया चारितधेनुचक्रः**
**कूलान्तिके विश्वजनानुकूलः ।**
**कलिन्दजां कालियपन्नगस्य**
**क्ष्वेलोद्गमैः कज्जलितां ददर्श ॥ १०९ ॥**

**यदृच्छयेति** । यदृच्छया स्वच्छन्देन । 'स्वच्छन्द निर्निमित्त च यदृच्छेत्यभिधीयते' इति हलायुध. । कूलान्तिके यमुनातीरसमीपे । चारितधेनुचक्रः सचारितधेनुगण । 'चक्र सैन्ये जलावर्ते रथाङ्गे चयराष्ट्रयोः' इति वैजयन्ती । विश्वजनानुकूल. कृत्स्नस्य जनस्य हितैषी कृष्णः । कालिन्दजा यमुनाम् । कालियपन्नगस्य कालियाख्यमहानागस्य । क्ष्वेलोद्गमैः विषोद्गमै. । कज्जलितां कज्जलीकृता, सान्द्रगरलद्रव्यसयोगेन मषीवद्घनीभूताम् । ददर्श ॥ १०९ ॥

**विषाग्निना मुर्मुरितप्रताने**
**वैरोचनीतीरवनावकाशे ।**
**अहीन्द्रमास्कन्दितुमध्यरुक्ष-**
**त्काष्ठाकृतिं कंचन नीपवृक्षम् ॥ ११० ॥**

**विषाग्निनेति** । कृष्णः तत्र जनानां हिंसकस्य कालियस्यावस्थान

निश्रित्य, अहीन्द्रं नागराजम् । आस्कन्दितु अभिभवितुम् । विषाग्निना तस्य विषानलेन । मुर्मुरितप्रताने सञ्जातमुर्मुरविस्तारे । 'मुर्मुरस्तु तुषानलः' इति वैजयन्ती । ततस्तारकादेराकृतिगणत्वादितच्प्रत्ययः । विरोचनस्य सूर्यस्यापत्यं स्त्री वैरोचनी यमुना तस्याः तीरवनावकाशे तटकाननान्तरे । काष्ठाकृति विषाग्निना पत्रपुष्पादिषु दग्धेषु स्थाणुमात्ररूपम् । कश्चन । नीपवृक्षं कदम्बतरुम् । अभ्यरुक्षत् आरोहति स्म ॥

**मधुद्रवैरुल्बणहर्षबाष्पा**
**रोमाञ्चिता केसरजालकेन ।**
**पत्राङ्कुरैश्चित्रतनुश्चकाशे**
**कृष्णाश्रिता शुष्ककदम्बशाखा ॥ १११ ॥**

**मधुद्रवैरिति** । कृष्णेनाश्रिता । शुष्कस्य कदम्बस्य शाखा । मधुद्रवैः मकरन्दरसैः । उल्बणहर्षबाष्पा प्रव्यक्तानन्दबाष्पा । 'स्फुटं प्रव्यक्तमुल्बणम्' इत्यमरः । केसरजालकेन किञ्जल्कनिवहेन । रोमाञ्चिता सञ्जातरोमाञ्चा । पत्राङ्कुरैः दलकदलैः, पत्ररेखाभिरित्यपि प्रतीयते । तैः चित्रतनुश्च सती । चकाशे भगवत्सम्पर्कातिशयः पुष्पपल्लवादिसमृद्धिमती बभासे इत्यर्थः । मधुद्रवादिष्वानन्दबाष्पत्वाद्यारोपात्कदम्बशाखायां नायिकात्वरूपणं गम्यत इत्ये**कदेशविवर्तिरूपकालङ्कारः** ॥ १११ ॥

**निपत्य संक्षिप्तपयोधिकल्पे**
**महाह्रदे मन्दरपोतरम्यः ।**
**विषव्यपोहादमृतं विधातुं**
**स्वादूदयं क्षोभयति स्म सिन्धुम् ॥ ११२ ॥**

**निपत्येति** । मन्दरपोतरम्यः मन्दराचलडिम्भ इव रमणीयः । 'पोतः पाकोऽर्भको डिम्भः' इत्यमरः । कृष्ण इति शेषः । सक्षिप्तपयोधिकल्पे संकुचितसमुद्रतुल्ये । महाह्रदे महति कालियाक्रान्ते ह्रदे । निपत्य । विषव्यपोहात् कालियविषनिरसनात् । अमृत जलम् । 'पयः कीलालममृतम्' इत्यमरः । स्वादुर्मधुरः उदयः उद्गमो यस्य तथाभूतम् । पक्षे कालकूटस्य व्यपोहात् पीयूष मधुरप्रादुर्भावम् । विधातु कर्तुम् । सिन्धु नदीं पक्षे समुद्रम् । क्षोभयति स्म । 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः ॥ ११२ ॥

**कृताहतिः कृष्णनिपातवेगा-**
**दानद्धरूपा विततैस्तरङ्गैः ।**
**सर्पापसारौषधिसंप्रयुक्ता**
**भेरीव सा भीमतरं ररास ॥ ११३ ॥**

**कृताहतिरिति** । कृष्णस्य निपातवेगात् । कृताहति कृतजलाभिघाता । विततैः विस्तृतैः । तरङ्गैः । आनद्धरूपा चर्मभिरिव समन्तात्पिनद्धाकारा । सा यमुना । सर्पापसारौषधिसप्रयुक्ता सर्पाणां यमुनावासिनामपसारस्यौषध्या अपसर्पणार्थेनौषधेन ससृष्टा । भेरीव । भीमतरम् अतिभीषण यथा तथा । ररास शब्दायते स्म । औषधविशेषरूषिताया भेर्यास्ताडने तच्छब्दश्रवणेन सर्पाः पलायन्त इति प्रसिद्धिः । भेर्यपि तरङ्गाकारैश्चर्मभिरानद्धा आहता च शब्दायत इति भावः ॥ ११३ ॥

**प्रसक्तकृष्णद्युतिभिस्तदीयैः**
**पृषत्कणैरुत्पतितैः प्रतूर्णम् ।**

अदृश्यताद्योतितमन्तरिक्षं
पीतान्धकारैरिव तारकौघैः ॥ ११४ ॥

**प्रसक्तेति** । प्रसक्तकृष्णद्युतिभिः अनुषक्तकृष्णदेहकान्तिभिः । तदीयैः यामुनैः । प्रतूर्णं उत्पतितैः कृष्णनिपातवेगाज्झटित्युत्थितैः । पृषत्कणैः बिन्दुकणैः । आद्योतित भासितम् । अन्तरिक्षम् । पीतान्धकारैः प्रस्तततमोभिः । तारकौघैः नक्षत्रगणैः । आद्योतितमिव । अदृश्यत । नीलवर्णाया अपि यमुनाया उत्थिताः पृषत्कणा धवला भवन्तस्तारा इव, तदनुषक्ताः कृष्णकान्तिकन्दला नक्षत्रतेजोभिः पीता अन्धकारशकला इव चासन्नित्युत्प्रेक्षा ॥ ११४ ॥

उदग्रसंरम्भमुदीक्ष्य भीता-
स्तार्क्ष्यध्वजं तार्क्ष्यमिवापतन्तम् ।
प्रपेदिरे सागरमाश्रितौघाः
काकोदराः कालियमात्रशेषाः ॥ ११५ ॥

**उदग्रेति** । आश्रितौघाः आश्रितयमुनाप्रवाहा । उदग्रसरम्भ अतिशयितकोपम् । 'सरम्भ सभ्रमे कोपे' इति शब्दार्णव. । तार्क्ष्यमिवापतन्त गरुडमिव भुजङ्गसहारार्थमापतन्तम् । तार्क्ष्यध्वज कृष्णम् । अवेक्ष्य । भीता । काकोदराः फणिनः । कालियमात्रशेषाः कालिय एव शेषो येषां तथाभूताः सन्त । सागरम् । प्रपेदिरे । कालियमेक विना सर्वेऽपि समुद्र प्रापुरित्यर्थः । कालिय एव कालियमात्रमिति विग्रहे सुप्सुपा इति समासः ॥ ११५ ॥

अथाम्भसः कालियनागमुग्रं
व्यात्ताननं मृत्युमिवोज्जिहानम् ।

भोगेन बध्नन्तमपोह्य शौरिः
प्रह्वीकृतं तत्फणमारुरोह ॥ ११६ ॥

**अथेति** । अथ अन्येषां पलायनानन्तरम् । शौरिः । उग्र क्रूरम् । व्यात्तानन दशनाय विवृतास्य सन्तम् । मृत्युमिव । अम्भसः उज्जिहान प्रवाहादुद्गच्छन्तम् । भोगेन बध्नन्त उद्गमनसमये स्वकायेन बध्नन्तम् । कालियमिति नाग बहुफण सर्पम् । अपोह्य यथा बन्धु न शक्नोति तथा निरस्य । प्रह्वीकृत अवनम्रीकृतम् । तस्य कालियस्य फणम् । आरुरोह । 'नागा बहुफणाः सर्पाः' इति यादवः । 'सहस्रफणः कालिय' इति भागवते ॥ ११६ ॥

सद्यो महानीलमयीं मुकुन्दः
सपद्मरागामिव पादपीठीम् ।
क्रामन्फणां कालियपन्नगस्य
ग्रस्तोदितो भानुरिवाबभासे ॥ ११७ ॥

**सद्य इति** । कालियपन्नगस्य । फणाम् । महानीलमयी ऐन्द्रनीलीम् । सपद्मरागां मध्ये पद्मरागखचिताम् । पादपीठीमिव । फणाया नैल्यात्फणारत्नलौहित्याच्चैवमुक्तिः । सद्यः तस्मिन्क्षणे । क्रामन् । मुकुन्दः । ग्रस्तोदितः राहुणा ग्रस्त एवोदितः । भानुरिव । आबभासे तत्फणामाक्रम्यैव प्रवाहादुन्मज्जनमनुसन्धाय ग्रस्तोदित इवेति विशेषितम् ॥ ११७ ॥

फणामणीनां प्रभयोपरक्ते
खेलन्प्रभौ चक्रिणि चक्रपाणिः ।

प्रदोषसिन्दूरितमम्बुवाहं
प्राचेतसो नाग इवोपमृद्नन् ॥ ११८ ॥

**फणेति** । फणानां ये मणयस्तेषाम् । प्रभया उपरक्ते । चक्रिणि सर्पे । 'चक्री व्याल सरीसृप.' इत्यमर । खेलन् क्रीडन् । चक्रपाणिः कृष्णः । प्रदोषेण सिन्दूरितं सजातसिन्दूर प्रदोषारुणितमिति यावत । अम्बुवाह मेघम् । उपमृद्नन प्रमथ्नन् । प्राचेतसो वारुणः । नाग पाश्चात्यो दिग्गज इव । बभौ ॥ ११८ ॥

प्रणेमुषां प्राणभृतामुदीर्णं
मनो विनेष्यन्विषमाक्षवक्त्रम् ।
अकल्पयत्पन्नगमर्दनेन
प्रायेण योग्यां पतगेन्द्रवाहः ॥ ११९ ॥

**प्रणेमुषामिति** । पतगेन्द्र पक्षिराजः वाहः वाहन यस्य स श्रीकृष्णः । 'वाहो ना यानेऽश्वे वृषभेऽपि च' इति रत्नमाला । प्रणेमुषां प्रणाम कृतवताम् । छन्दसि भूते लिटः क्वसु. । अत एकह-लित्यादिना एत्वमभ्यासलोपश्च । विनयनक्रियापेक्षयेद भूतत्वम् । क्व-यस्तु बहुल प्रयुञ्जत इत्युक्तेः भाषायामपि क्वसु साधुः । प्राणभृतां प्राणि-नाम् । उदीर्ण उद्गत उद्वृत्तमिति यावत् । गत्यर्थात् ऋधातोः कर्तरिक्ते ऋत इदितीत्वे हलि चेति दीर्घे निष्ठानत्वम् । विषमाणि विषमसख्याकानि अक्षाणि इन्द्रियाण्येव वक्त्राणि मुखानि यस्य तादृशम् । 'अक्षमिन्द्रियमक्षो ना रथाङ्गव्यवहारयोः' इति रत्नमाला । इन्द्रियाणां विषमत्व ज्ञानेन्द्रियवि-वक्षया 'चक्षुराद्युक्तविषय परतन्त्र बहिर्मनः' इत्याद्यनुरोधेन ज्ञानेन्द्रिया-णामेव मनोवक्त्रत्वौचित्यात् । 'दशेन्द्रियानन घोरं यो मनो रजनीचरम् ।'

इत्याद्यनुरोधेन दशेन्द्रियाननत्वनिर्बन्धे तु विषमाणि भिन्नभिन्नविषयप्रवृत्तानीत्यर्थः । शिष्टं प्राग्वत् । इदं च विशेषणद्वयं पन्नगे मनस्साधर्म्यसंपादनार्थम् । पन्नगोऽपि हि उदीर्णश्च । विषमाणि क्रूराणि अक्षीणि नेत्राणि येषु तादृशानि वक्त्राणि यस्येति विषमाक्षवक्त्रश्च भवति । बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षजिति षच । 'तस्याक्षिभिर्गरलमुद्वमतश्शिरस्सु यद्यत्समुन्नमति निश्वसतो रुषोच्चैः ।' इति श्रीभागवतोक्त्या कालिये बहुवक्त्रत्वस्य अक्ष्णां क्रूरत्वस्य च स्पष्टत्वात् । साधर्म्यसंपादनं तु पन्नगे योग्याप्रतिपादनसिद्ध्यर्थं । यदाह सुश्रुतः । तस्मात्कौशलमन्विच्छन्शस्त्रक्षाराग्निकर्मसु । यस्य यत्रेह साधर्म्यं तत्र योग्यां समाचरेदिति । मनः मानसं कर्म जातावेकवचनम् । प्राणभृतामिति बहूक्तेः । विनेष्यन् सन् विनयं प्रापयिष्यन् सन् अमार्गान्निवर्तयिष्यन् सन्निति यावत् । अस्य चाकल्पयदित्यनेनान्वयः । पन्नगस्य उद्रिक्तस्य विषमदृष्टिवक्त्रस्य कालियस्य मर्दनेन पीडनेन । योग्यां अभ्यासं मनोविनयने कौशलसंपादनार्थं तदभ्यासमिति यावत् । प्रायेणाकल्पयत् अकल्पयदिवेत्युत्प्रेक्षा । प्रायेणेत्युत्प्रेक्षाव्यञ्जकः । 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षाव्यज्यते शब्दैरिव शब्दोऽपि तादृशः ' इत्यत्र आदिपदेन प्रायेणेत्यस्यापि ग्रहणात् । यथा हि लोके कश्चित् क्वचिद्वस्तुनि कर्तव्ये स्वव्यापारे कौशलसंपादनाय तद्वस्तुसदृशे वस्त्वन्तरे तस्यैव व्यापारस्य अभ्यासं करोति तद्वत् विनतानां उद्रिक्ते मनसि विनयनव्यापारं करिष्यन् तत्कौशलसंपादनार्थं मनस्तुल्ये पन्नगे मर्दनाभ्यासं कृतवानिवेति भावः । अन्यदप्याह सुश्रुतः । सुबहुश्रुतोऽप्यकृतयोग्यः कर्मस्वयोग्यो भवतीति । योग्याशब्दस्तु श्रीमद्रामायणे अस्त्रयोग्यान्तरेष्वपीत्यत्र प्रयुक्तः । पतगेन्द्रवाह इति विशेष्यं पन्नगमर्दनसामर्थ्याभिप्रायगर्भमिति परिकराङ्कुरोऽपि । अत्र यद्यपि प्रायेण योग्यमित्येव पाठो दृश्यते । योग्यं क्लीबे पूपयानचन्दनाभ्यासवाचकम् । प्रवीणोपायवच्छक्तयोगार्हेष्वप्ययं

त्रिष्विति नानार्थरत्नमालापि तदनुकूलैव । तथापि योग्यः प्रवीणयोगा-
र्होपाधिशक्तेषु वाच्यवत्। क्लीबमृज्यौषधे पुष्ये नारुयभ्यासार्कयोषितोरिति
मेदिनीकोशेन सुश्रुतादिप्रयोगबाहुल्येन च स्त्रीलिङ्गपाठ एवादृत इति दिक् ॥

**तद्भोगबृन्दे युगपन्मुकुन्द-**
**श्चारीविशेषेण समीक्षि नृत्यन् ।**
**पर्याकुले वीचिगणे पयोधेः**
**संक्रान्तबिम्बो बहुधेव चन्द्रः ॥ १२० ॥**

**तद्भोगेति** । युगपत् । तद्भोगबृन्दे तस्य सहस्रफणस्य कालियस्य
फणासमूहे । 'भोगो राज्ये धने सौख्ये पालनाभ्यवहारयोः । फणे देहे च
सर्पस्य वेश्यादीनां भृतावपि' इति वैजयन्ती । चारीविशेषेण नृत्तसमये
युगपत्कृतमङ्घ्रिजङ्घोरुकटिकर्म चारी । चरतिधातोः करणार्थे इञ्प्रत्ययः ।
ततः 'कृदिकारादक्तिनः' इति ङीष् । तदुक्तं सगीतरत्नाकरे—'विचित्रम-
ङ्घ्रिजङ्घोरुकटिकर्म सकृत्कृतम् । चारी स्यात्करणे ङीषि चरेरिञ्प्रत्यया-
न्ततः' इति । 'एकपादप्रचारो यः स चारीत्यभिधीयते' इति तु शारदा-
तनयः । तस्या विशेषः समास्थिरावर्तेत्यादिरूपः तेन । नृत्यन् । मुकुन्दः ।
पयोधेः समुद्रस्य । पर्याकुले चञ्चले । वीचिगणे । बहुधा सक्रान्तबिम्बः ।
चन्द्र इव । समीक्षि समीक्षित. । चन्द्रप्रतिबिम्बानां नृत्तवचाञ्चल्यार्थं पर्या-
कुल इति विशेषणम् ॥ १२० ॥

**तदुत्तमाङ्गं परिकल्प्य रङ्गं**
**तरङ्गनिष्पन्नमृदङ्गनादम् ।**
**प्रशस्यमानस्त्रिदशैरकार्षी-**
**दव्याहतामारभटीमनन्तः ॥ १२१ ॥**

**तदुत्तमाङ्गमिति ।** अनन्तः कृष्णः । 'अनन्तो नागराड्विष्णुः' इति विश्वः । तस्य कालियस्य उत्तमाङ्गं शिरः । रङ्ग नृत्तस्थानम् । परिकल्प्य । तरङ्गनिष्पन्नमृदङ्गनाद तरङ्गैर्निष्पन्नो मृदङ्गनादो यथा भवति तथा । त्रिदशैः देवैः । प्रशस्यमानः उपश्लोक्यमानः सन् । अव्याहतां अप्रतिहताम् । आरभटीं नटनार्भटीम् । अकार्षीत् ॥ १२१ ॥

**एकेन हस्तेन निपीड्य वालं**
**पादेन चैकेन फणामुदग्राम् ।**
**हरिस्तदा हन्तुमियेष नागं**
**स एव संसारमिवाश्रितानाम् ॥ १२२ ॥**

**एकेनेति ।** हरिः । तदा । एकेन वामेन हस्तेन । वाल निपीड्य । एकेन पादेन दक्षिणपादेन । उदग्रां उन्नताम् । फणां च निपीड्य । नाग कालियम् । स कृष्ण एव । आश्रितानां ससारमिव । हन्तुम् । इयेष ॥

**स पन्नगीनां प्रणिपातभाजां**
**द्रवीभवन्दीनविलापभेदैः ।**
**प्रसादितः प्रादित भर्तृभिक्षां**
**किमस्य नः स्यादपदं दयायाः ॥ १२३ ॥**

**स इति ।** प्रणिपातभाजां प्रणतिजुषाम् । पन्नगीनां कालियपत्नीनाम् । दीनविलापभेदैः कातरपरिदेवनविशेषैः । द्रवीभवन् करुणापरवशो भवन् । प्रसादितः प्रणिपातापराधसहनप्रार्थनादिना प्रसादं प्रापितः। स कृष्णः । भर्तृभिक्षां ताभिः प्रार्थ्यमानाम् । प्रादित दत्तवान् । प्रपूर्वाद्दाञो लुङ् । कथमतिद्रोही विसृष्ट इत्यत आह—**किमिति** । नः अस्माक संसारिणां मध्ये । अस्य । दयायाः । अपदं अविषयः । किं स्यात् न किमपी-

त्यर्थः । परमकारुणिकस्य प्रणिपातमात्रानपनोद्यो नास्ति प्राणिनां द्रोह इति भावः ॥ १२३ ॥

**लोलापतच्चरणलीलाहतिक्षरितहालाहले निजफणे**
**नृत्यन्तमप्रतिघकृत्यं तमप्रतिममत्यन्तचारुवपुषम् ।**
**देवादिभिः समयसेवादरत्वरितहेवाकघोषमुखरै-**
**र्दृष्टावधानमथ तुष्टाव शौरिमहिरिष्टावरोधसहितः ॥**

**लोलेति** । अथ अनन्तरम् । अहिः कालियः । इष्टैः अवरोधैः अन्तःपुरस्त्रीभिः सहितः सन् । अवरोधशब्देन तात्स्थ्यादवरोधस्त्रियो लक्ष्यन्ते । लोलस्य स्वनृत्तेन चलस्य आपततः चरणस्य लीलाहत्या लीलयाभिघातेन क्षरितहालाहले उद्गीर्णविषे । निजफणे । नृत्यन्तम् । अप्रतिघकृत्यं प्रत्याहतिरहितकृत्यम् । 'प्रतिघौ रुट्प्रतीघातौ' इति वैजयन्ती । अप्रतिम असदृशम् । अत्यन्तचारुवपुषम् । समयसेवादरत्वरितहेवाकघोषमुखरैः पराक्रमसमये सेवायामादरत्वरितेन हेवाकघोषेण स्वच्छन्दस्तुतिघोषेण शब्दायमानैः । 'हेवाकः स्वाच्छन्द्यम्' इति चक्रवर्ती । देवादिभिः देवासुरगन्धर्वप्रमुखैः । दृष्टावधानं दृष्टनृत्तप्रणिधानम् । शौरिम् । तुष्टाव । अत्र ' विविधधववनानागगर्धधनाना विविततगगनाना-ममज्जनाना ' इत्यादौ एकवर्णावृत्तेरपि यमकत्वमङ्गीकुर्वतो वामनस्य मते **यमकालङ्कारः** । मतान्तरे **त्वनुप्रासः** ॥ १२४ ॥

**हरिचरणसरोजन्यासधन्योत्तमाङ्गः**
**शमितगरुडभीतिः सानुबन्धः स नागः ।**
**युगविरतिदशायां योगनिद्रानुरूपां**
**शरणमशरणः सम्प्राप शय्यां तदीयाम् ॥ १२५ ॥**

**हरीति** । हरेः चरणसरोजन्यासेन धन्योत्तमाङ्गः कृतार्थमूर्धा । शमितगरुडभीतिः भगवता क्षपितगरुडभयः । सानुबन्धः अनुयायिना पुत्रमित्रकलत्रादिना सहितः । 'दोषोत्पादेऽनुबन्धः स्यात्प्रकृत्यादिषु नश्वरे । मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने' इत्यमरः । स नागः कालियः । युगविरतिदशायां युगान्तकाले । योगनिद्राया अनुरूपां उचिताम् । तदीयां शय्यां समुद्रमित्यर्थः । अशरणः गत्यन्तररहितः सन् । शरणं प्राप आवासस्थानं जगाम । 'शरणं गृहरक्षित्रोः' इत्यमरः । पुरा समुद्रे स्थितः कालियो गरुडेन निर्जितस्तद्भीत्या सौभरिशापाद्गरुडेनानाक्रमणीयं कालिन्दीह्रदमध्युवास । ततः कृष्णेन ततोऽपनीतभयः समुद्रं प्रापेति पौराणिकी कथा ॥ १२५ ॥

**विविधमुनिगणोपजीव्यतीर्था**
**विगमितसर्पगणा परेण पुंसा ।**
**अभजत यमुना विशुद्धिमग्र्यां**
**शमितबहिर्मतसंप्लवा त्रयीव ॥ १२६ ॥**

**विविधेति** । विविधानां मुनिगणानां उपजीव्यानि निषेव्याणि तीर्थानि जलावतारप्रदेशा यस्याः सा । पक्षे विविधमुनिजनोपजीव्यानि तीर्थानि स्वाङ्गभूतानि मीमांसादिशास्त्राणि यस्याः सा । यमुना । परेण पुंसा परमात्मना कृष्णेन । विगमितसर्पगणा अपसारितभुजङ्गकुला सती । पक्षे परेण उत्कृष्टेन वेदार्थनिर्धारणनिपुणेन पुंसा । शमितबहिर्मतसप्लवा अपगमितपाषण्डसंकरा । त्रयी त्रिवेदीव । अग्र्यां उत्कृष्टाम् । विशुद्धिम् । अभजत आप । 'तीर्थं मन्त्राद्युपाध्यायशास्त्रेष्वम्भसि पावने । पात्रोपायावतारेषु स्त्रीपुष्पे योगयज्ञयोः' इति वैजयन्ती । **पुष्पिताग्रा** वृत्तमेतत् ॥ १२६ ॥

अवधूतभुजङ्गसङ्गदोषा
हरिणा सूर्यसुता पवित्रिता च ।
अपि तत्पदजन्मनः सपत्न्या
बहुमन्तव्यतरा भृशं बभूव ॥ १२७ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
यादवाभ्युदये काव्यरत्ने
**चतुर्थः सर्गः ॥**

**अवधूतेति** । हरिणा । अवधूतभुजङ्गसङ्गदोषा निरस्तकालियसंसर्गरूपदोषा । पवित्रिता च स्वयमवगाहनेन पावनीकृता च । सूर्यसुता यमुना । तत्पदजन्मनः तस्य हरेः पदाज्जन्म यस्यास्तस्याः । सपत्न्याः गङ्गाया अपि । भृश अत्यर्थम् । बहुमन्तव्यतरा अतिशयेन बहुमन्तव्या । बभूव । दोषनिरसनेन गुणसपादनेन भगवत्परिग्रहात्तत्पादभवत्वमात्रेण तदीयत्वाभिमानवत्या गङ्गाया अपि बहुमानास्पदमभूदित्यर्थः । यद्यपि समानाधिकरणानामेव बहुव्रीहिरिष्यते, तथापि जन्मन उत्तरपदत्वाद्व्यधिकरणबहुव्रीहि । 'अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' इति वामनसूत्रात् । **औपच्छन्दसिकं** नामैतद्वृत्तम् ॥ १२७ ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीविश्वजिद्याजि-
श्रीरङ्गराजाध्वरिवरसूनुना अप्पय्यदीक्षितेन
विरचिते यादवाभ्युदयव्याख्याने
**चतुर्थः सर्गः ॥**

**श्रीमते वेदान्तगुरवे नमः ।**

# श्लोकानुक्रमणिका ॥




| | पृष्ठम् |
|---|---|
| **अ** | |
| अकर्तुम | ३७ |
| अकर्मनि | १६९ |
| अकृतसे | १४३ |
| अक्षुद्रग | २५ |
| अखिललो | १२९ |
| अगाधका | १९९ |
| अजनि गोप | १५२ |
| अजनि पश्चि | १४२ |
| अजः स्वज | ११५ |
| अत आलो | २९ |
| अतिप्रस | २१० |
| अथ कया | १४३ |
| अथ च भो | १४६ |
| अथ जग | ११९ |
| अथ तान्भ | ५२ |
| अथ निश | १३३ |
| अथ सित | ११६ |
| अथागमा | ५७ |
| अथाङ्गणे | १६३ |
| अथापदा | २०९ |
| अथाम्भसः | २२० |
| अदृष्टपूर्व | १७७ |
| अदृष्टपूर्वै | १७९ |
| अधर्मनि | २८ |
| अधिचका | १५३ |
| अनघव | १५२ |
| अनङ्गसि | २०९ |
| अनर्तिवे | १२० |
| अनन्यत | १९४ |
| अनन्यर | ३९ |
| अनन्याधी | ३१ |
| अनपाय | ८८ |
| अनवबुद्ध | १४५ |
| अनादरा | १७६ |
| अनादरे | ६८ |
| अनाप्तपू | ६७ |
| अनाविल | ३५ |

| | पृष्ठम् | | पृष्ठम् |
|---|---|---|---|
| अनिदपू | ३९ | अविषये | १४९ |
| अनुग्रहा | १७८ | अवेदिषा | २०८ |
| अनुद्रुता | २१३ | अशिक्षित | १९० |
| अनुश्रवा | १८६ | अशेत सा | ६८ |
| अन्तःस्थित | ७० | अशेषवे | ५८ |
| अपत्यला | ८९ | असुरवी | १२४ |
| अपत्रपा | १९० | अहमशे | १४७ |
| अपरिच्छिद्य | ३६ | **आ** | |
| अपुनःप्रा | २१ | आघ्रातव | २०२ |
| अपूरय | १७४ | आत्मीयप | २१३ |
| अबालिशो | १९६ | आत्मोपम | १९७ |
| अभयोदा | ४५ | आनकानां | २४ |
| अभृङ्गना | ८५ | आनीतम | १७५ |
| अमितस्य | ३३ | आबद्धम | ५० |
| अयन्त्रित | १९१ | आरांजित | ४२ |
| अलक्ष्यत | ८४ | आरण्यका | १७२ |
| अलिप्सत | २६ | आलम्ब्य मा | १६९ |
| अवतर | ११७ | आश्वास्य वा | ५४ |
| अवतार्य | ५२ | आसीन्निषे | १७९ |
| अवदधा | १२२ | **इ** | |
| अवधूत | २२८ | इति तान | ५४ |
| अवनिभा | १३० | इति ते भू | २९ |
| अवादितो | ११४ | इति स भी | १३१ |

| | पृष्ठम् |
|---|---|
| इत्थ वद | ४९ |
| इयमम | १३२ |
| **उ** | |
| उत्तेजित | ४३ |
| उदग्रस | २२० |
| उदपत | १४६ |
| उदारता | ९८ |
| उदितमा | १२५ |
| उदेत्य | ९७ |
| उपगते | १४४ |
| उपयतो | १३६ |
| उलूखल | १७६ |
| **ए** | |
| एकेन | २२५ |
| एतस्मिन्न | २७ |
| **क** | |
| कसप्रभृ | ४८ |
| कथं व्रजे | १९४ |
| कदम्बमा | १०५ |
| कदाचिदन्त | १५७ |
| कदाचिदासा | २१५ |
| कया चिद | २७ |
| करम्बिता | ६१ |
| कराम्बुज | २०४ |
| करुणाधी | ४७ |
| करेण दम्भो | २११ |
| करेण संको | ९२ |
| कलङ्कन्चि | १०१ |
| कलङ्कल | १०६ |
| कलापिनां | १८६ |
| कलावता | १०४ |
| कस्तूरिका | ६५ |
| काले बभा | ६० |
| किमपि चि | १४९ |
| कृतास्पदा | १८८ |
| कृताहतिः | २१९ |
| कृशोदरी तार | ७४ |
| कृशोदरी लोच | ९४ |
| क्रमेण | १६८ |
| क्रियामुपा | ७२ |
| क्रीडातूलि | १२ |
| क्वचन | १५० |
| क्षरदसू | १३६ |
| क्ष्वेलोपमे | ९० |
| **ग** | |
| गृहेषु | १७१ |

| | पृष्ठम् |
|---|---|
| गोपायमा | १९६ |
| गोपाश्च | १५९ |
| ग्रहादिदोषा | १६० |
| **घ** | |
| घनतमः | १४१ |
| **च** | |
| चकाशिरे | १०९ |
| चतुर्णा पु | ४६ |
| चरमत | १२४ |
| **ज** | |
| जगदाह्वा | १४ |
| जडमतिः | १४८ |
| जाता निखि | ४७ |
| जिगमिषुः | १३५ |
| जिगाय | ९६ |
| **त** | |
| त इमे | ४६ |
| तटाकमिव | १९ |
| ततस्तं | ४१ |
| तदा तमः | ८३ |
| तदात्वे | १० |
| तदुत्तमाङ्ग | २२४ |
| तद्भोगबृन्दे | २२४ |

| | पृष्ठम् |
|---|---|
| तनुतर | १३८ |
| तनुमध्या | ५० |
| तमस्तरं | १०८ |
| तमः प्रस | ८८ |
| तमस्समा | ९० |
| तमांसि | ९२ |
| तमिस्र | ८६ |
| तमीषदु | १६६ |
| तरङ्गिता | १६५ |
| तलेषु | १७० |
| तलेष्ववे | १०७ |
| तस्मै विज्ञा | ४५ |
| तस्यास्सुधो | ६२ |
| तापोपशा | ७८ |
| ताभ्यां तदा | १९९ |
| तुहिनभा | १३४ |
| तेन निर्म | २४ |
| त्रस्यन्मुकु | १७२ |
| त्रिलोकमां | ७१ |
| त्रिवर्गम | ३८ |
| त्रिवेदीम | ३० |
| त्वदनुभा | १२८ |
| त्वदालम्बि | ३८ |

| | पृष्ठम् | | पृष्ठम् |
|---|---|---|---|
| त्वदेकव्य | ३२ | नभस्तुषा | १११ |
| त्वदेकश | ४० | नम्यस्य | ३३ |
| त्वयि न देव | १२९ | नरेन्द्राः | १७ |
| त्वयि न्यस्त | ४९ | नवप्रसूताः | २०५ |
| द | | नवेन्दुान | ६० |
| ददानया | १०३ | न व्याधिर्पा | २०० |
| दनुजमो | १३० | निखिलचे | १२३ |
| दमनाद्द | ५३ | निगूडम | ७४ |
| दशसु | १२० | निदेश | १८ |
| दिनकरो | १३७ | निधिमन | १५४ |
| दिवौकसो | ७७ | निमज्जता | ८० |
| दिशस्तदा | ९१ | निर्मिषिता | १४० |
| दिशागजा | २११ | निमीलितानां | ८५ |
| दुरितोद | ३६ | निरङ्कुश | १८९ |
| देवस्य | २०२ | निराधार | ३४ |
| देहीति वद | २० | निराशिषां | ६७ |
| दैतेयमृ | ५३ | निरीतय | २०१ |
| दैत्यैस्तृणा | १८० | निपत्य | २१८ |
| न | | निवर्तय | २०७ |
| नटवद्भू | ३३ | निविश्य | २०५ |
| ननूतुर | ११९ | निर्व्याजम | १६४ |
| नन्दश्च | १५९ | निशम्य | १५८ |
| नन्दसद्म | १५५ | निशाकरेण | ८७ |

| | पृष्ठम् | | पृष्ठम् |
|---|---|---|---|
| निशाकरो | ९५ | प्रगुणमि | १३८ |
| निशात्यय | १८१ | प्रणिपता | १२६ |
| निशीथल | ९८ | प्रणेमुषा | २२२ |
| नृपतिरा | १४५ | प्रदीपितै | ११५ |
| न्यधित | १४४ | प्रदोषरा | ८२ |
| **प** | | प्रबुद्धता | ११२ |
| पतिस्सस | ७७ | प्रबोधसु | ४९ |
| पत्न्या सह | ४१ | प्रवृत्ताम | ११ |
| पदैस्त्रिभिः | १६७ | प्रमक्तक्र | २१९ |
| पपात | २१५ | प्रसक्तपा | ८० |
| परश्वधै | १६० | प्रसदन | १२२ |
| पराकृत | १०३ | प्रसादभा | ११० |
| परावरा | ६५ | प्रमादमं | ९४ |
| परिक्रम | ६९ | प्रसुप्तमु | १८३ |
| परिबभूव | १५० | प्रस्फुरन्त | ५१ |
| पवनक | १३९ | प्रागेव | ११३ |
| पितरम | १२६ | प्रायेण | १०६ |
| पितृत्वमा | ७८ | प्रियसन्द | ५० |
| पुत्र प्रसू | १५४ | प्रियामुखै | १०० |
| पुरस्कृत | १८१ | **फ** | |
| पुरस्कृत्य | ३० | फणामणि | ८१ |
| प्रकाशय | ९९ | फणामणीनां | २२१ |
| प्रख्यातवि | २५ | **ब** | |

| | पृष्ठम् | | पृष्ठम् |
|---|---|---|---|
| बद्ध तथा | १७५ | य एष लो | १७१ |
| बंभूव | १६ | यदपत्य | १५ |
| बालं तरु | २०७ | यदवबु | १५१ |
| ब्रह्मादिस्त | ३४ | यदि न त्वर | ४७ |
| भ | | यदि बिभे | १३३ |
| भवति किं | १४१ | यदुपते | १४२ |
| भागेन | ११२ | यदुर्नाम | २० |
| भुक्ता पुरा | ६३ | यदृच्छया | २१७ |
| म | | यदृच्छया याद | ७२ |
| मदोदया | ९३ | यदृच्छयो | १६३ |
| मधुद्रवै | २१८ | यदेकम | ३८ |
| मधुरिपो | १२२ | यदेकैक | ६ |
| मधुहिर | १४८ | यन्मूलम | ३७ |
| मनीषित | १५६ | यशः प्रसू | २३ |
| मयि स्थिते | ७५ | यावदिष्ट | ५३ |
| मयूरपिञ्छ | ५९ | युक्तदण्ड | २२ |
| महीयसा | १९८ | येनौषधी | १७८ |
| मा भैषुर | ५२ | योऽसावनन्त | १९८ |
| मुकुन्दग | ७६ | र | |
| मुहुः प्रत्न | १७४ | रक्षाविधौ | ६३ |
| मुहुः स्पृश | १८७ | रम्याणि रत्ना | १६१ |
| मृगेण | ९६ | रशनार | ४८ |
| य | | रागादिरोग | २१२ |

| | पृष्ठम् |
|---|---|
| रोमन्थफे | २०४ |
| **ल** | |
| लिलेख विश्वा | ६६ |
| लोलापत | २२६ |
| **व** | |
| वशस्वनो | १८४ |
| वशे सम | २४ |
| वन्दे वृन्दा | २ |
| वबुरथो | १२१ |
| वसति नन्द | १४७ |
| वसुधाश्रो | ८ |
| वत्सानुच | २०१ |
| विकचकै | १४० |
| विगतक | १५१ |
| विजघटे | १३५ |
| विजृम्भमा | २१० |
| वितन्वता | १८७ |
| विदारितः | १६२ |
| विदित | २८ |
| विधृतशङ्ख | १२५ |
| विनैव | २१६ |
| विपदं | ५१ |
| विमोहने | १९१ |

| | पृष्ठम् |
|---|---|
| विविधमू | २२७ |
| विशालवि | १८ |
| विशोधित | ९९ |
| विश्वानि | १६४ |
| विषमक | १२७ |
| विषाग्निना | २१७ |
| विहाय | १२ |
| विहारप | १८४ |
| विहारवि | १९५ |
| वीरो रस | १७ |
| व्रजोपकण्ठे | २१४ |
| **श** | |
| शक्तिरप्र | १७ |
| शक्त्या शौरि | ७ |
| शतह्रदा | ५९ |
| शनश्शनै | ७५ |
| शराणां शात | २२ |
| शाखावका | १०३ |
| शापावधि | १७७ |
| शृङ्गारवी | ५७ |
| शेषे शया | ७० |
| श्रुतिकिरी | १२८ |
| श्रुतिमयो | १३७ |

| | पृष्ठम् | | पृष्ठम् |
|---|---|---|---|
| श्रुतिरूपे | ४३ | समाश्रितां | १८५ |
| श्रुतिसुगन्धि | १३४ | समाहिते | २०३ |
| **स** | | समीपत | ९३ |
| ससारम | ३५ | सुमुन्नम | ९१ |
| स कविः | ९ | सरिन्मुखे | ११० |
| सकालाति | २७ | स विष्णुरिव | २५ |
| स च वृत्त | २१ | स शायित | १६२ |
| स चात्म | १८३ | स सञ्चर | १६८ |
| स चैकह | १८२ | सह प्रति | ११४ |
| स ताभ्याम | २६ | सहोदिता | १११ |
| सतां चतु | ७३ | साचीकृता | १८८ |
| सतारपु | ८३ | साधूनां | ५५ |
| सति सूर्ये | ४० | सिन्दूरितौ | १९५ |
| स दुर्दमा | १५६ | सिषेविरे | २०५ |
| स दैत्यह | ४१ | सुकुमार | ८२ |
| सद्यो महा | २२१ | सुजातरे | १७३ |
| स नैचिकीः | २०६ | सुरप्रसू | १६९ |
| सपक्षकै | १८० | सुरमही | १५३ |
| सपत्नर्गा | २२५ | सुरासुरा | ७१ |
| स भवान्नु | ३१ | सुवर्ण | ७९ |
| समवर्ध | १५ | स्खलद्गति | १६७ |
| समाधिसु | ६४ | स्तन्येन | १५७ |
| समाक्रमे | २०६ | स्फुरत्प्रभा | ८१ |

| पृष्ठम् | | पृष्ठम् |
|---|---|---|
| ७६ | स्वसंभवं | १९३ |
| ४३ | स्वदूनि वन्या | १९९ |
| १०१ | ह | |
| २१६ | हत्वा सयू | २१४ |
| १०८ | हरिचरण | २२६ |
| ४४ | | |


